॥ ॐ ॥

।श्रीगणेशायनमः।

। अथहिरण्यकेशीदर्शपौर्णमासाध्वर्युयजमानाग्नीध्रब्रह्मप्रयोगः।

प्रातरग्निहोत्रानन्तरंदर्भेष्वासीनोदर्भान्धारयमाणोयजमानःपत्न्यासहप्राणानायम्यदेशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थंपौर्णमासेष्ट्यायक्ष्ये। दर्शेतुदर्शेष्ट्यायक्ष्ये। अस्यांपौर्णमासेष्ट्यांअध्वर्युंत्वामहंवृणे। अध्वर्युःभविष्यामि। इत्युक्त्वागार्हपत्यादाहवनीयमुद्धृत्यदक्षिणाग्निंप्रणीयाहवनीयंप्रणयति। ममाग्नेवर्चोविहवेष्वस्तुवयंत्वेंधानास्तनुवंपुषेम। मह्यंनमंतांप्रदिशश्चतस्रस्त्वयाध्यक्षेणपृतनाजयेम। आहवनीयमन्वादधाति। यजमानोध्वर्युश्च। अग्निंगृह्णामिसुरथंयोमयोभूर्यउद्यंतमारोहंतिसूर्यमह्ने। आदित्यंज्योतिषांज्योतिरुत्तमःश्वोयज्ञायरमतांदेवताभ्यः। वसून्रुद्रानादित्यानिंद्रेणसहदेवताः। ताःपूर्वःपरिगृह्णामिस्वआयतनेमनीषया। इमामूर्जं पंचदशीयेप्रविष्टास्तान्देवान्परिगृह्णामिपूर्वः। अग्निर्हव्यवाडिहतानावतु। पौर्णमासःहविरिदमेषांमयि। पौर्णमास्यां। आमावास्यःहविरिदमेषांमयि। अमावास्यायाम्। आहवनीयेन्वाधीयमानेजपतः। अन्तराग्नीपशवोदेवसःसदमागमन्। तान्पूर्वःपरिगृह्णामि स्वआयतनेमनीषया। अन्तराग्नीतिष्ठन्जपतः। अध्वर्युः। ममदेवाविहवेसंतुसर्वइंद्रावंतोमरुतोविष्णुरग्निः। ममांतरिक्षमुरुगोपमस्तुमह्यंवातःपवतांकामेअस्मिन्। गार्हपत्यमन्वादधाति। यजमानोध्वर्युश्च। इहप्रजाविश्वरूपारमंतामग्निंगृहपतिमभिसंवसानाः। ताःपूर्वःपरिगृह्णामिस्वआयतनेमनीषया। इहपशवोविश्वरूपारमंतामग्निंगृहपतिमभिसंवसानाः। तान्पूर्वःपरिगृह्णामिस्वआय तनेमनीषया। गार्हपत्येन्वाधीयमानेजपतः। अध्वर्युः। मयिदेवाद्रविणमायजंतांमय्याशीरस्तुमयिदेवहूतिः। दैव्याहोतारावनिषंतपूर्वेरिष्टाःस्यामतनुवासुवीराः। दक्षिणाग्निमन्वादधाति। यजमानोध्वर्युश्च। अयंपितृणामग्निरवाड्ढव्यापितृभ्यआ। तंपूर्वः परिगृह्णाम्यविषन्नःपितुंकरत्। दक्षिणाग्निमन्वाधीयमानेजपतः। यजमानः। इदमहमग्निज्येष्ठेभ्योवसुभ्योयज्ञंप्रब्रवीमि। इदमहमिंद्रज्येष्ठेभ्योरुद्रेभ्योयज्ञंप्रब्रवीमि। इदमहंवरुणज्येष्ठेभ्यआदित्येभ्योयज्ञंप्रब्रवीमि। अन्वाहितेषुजपति। अध्वर्युः। पलाशशाखाःशमीशाखांवाहरति। इषेत्वा। शाखामाच्छिनत्त्यपउपस्पृश्य। ऊर्जेत्वा। सन्नमयत्यनुमार्ष्टिवा। इमांप्राचीमुदीचीमिषमूर्जमभिसःस्कृतां। बहुपर्णामशुष्काग्राःहरामिपशुपाअहं। आहरति। वायवस्थोपायवस्थ। तयाषड्कृत्वोवत्सानपाकरोति। यजमानः। विद्युदसिविद्यमेपाप्मानमृतःसत्यमुपैमिमयिश्रद्धा। अपउपस्पृश्य। अपरेणाहवनीयंदक्षिणातिक्रम्य। पयस्वतीरोषधयःपयस्वद्वीरुधांपयः। अपांपयसोयत्पयस्तेनमामिंद्रसःसृज। अपआचामति।

स्मार्तावृत्तापुनराचामति। देवांदेवेषुपराक्रमध्वं। प्रथमाद्वितीयेषु। द्वितीयास्तृतीयेषु। त्रिरेकादशाइहमावत। इदश्शकेयंयदिदंकरोमि। आत्माकरोत्वात्मने। इदंकरिष्येभेषजं। इदंमेविश्वभेषजा। अश्विनाप्रावतंयुवं। देवताउपतिष्ठते। समुद्रंमनसाध्यायन्। सम्राडसिव्रतपा असिव्रतानांव्रतपतिरसिव्रतमारभेतत्तेप्रब्रवीमितच्छकेयंतेनशकेयंतेनराध्यासं। आदित्यमुपतिष्ठते। अग्नेव्रतपतेव्रतंचरिष्या मितच्छकेयंतन्मेराध्यतां। अग्निं। वायोव्रतपतेव्रतंचरिष्यामितच्छकेयंतन्मेराध्यतां। वायुं। आदित्यव्रतपतेव्रतंचरिष्यामित च्छकेयंतन्मेराध्यतां। आदित्यं। व्रतानांव्रतपतेव्रतंचरिष्यामितच्छकेयंतन्मेराध्यतां। व्रतपतिं। अध्वर्युः। देवोवःसविताप्रार्पयतुश्रेष्ठतमायकर्मणआप्यायध्वमघ्नियाइंद्रायदेवभागमूर्जस्वतीःपयस्वतीःप्रजावतीरनमीवाअयक्ष्मामावःस्तेन ईशतमाघशंसः। गाःप्रस्थापयति। महेन्द्रायेतिमहेन्द्रयाजिनः। शुद्धाअपःसुप्रपाणेपिबंतीः। शतमिंद्रायशरदोदुहानाः। रुद्रस्यहेतिःपरिवोवृणक्तु। प्रस्थिताअनुमन्त्रयते। ध्रुवाअस्मिन्गोपतौस्यातबह्वीः। गृहानभिपर्यावर्तते। यजमानस्यपशून्पाहि। अग्न्यगारेपुरस्तात्प्रतीचींशाखामपगूहति। अत्रामावास्यायांवेदंकृत्वावेदिंप्रागुत्तरस्मात्परिग्राहात्करोति। देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामाददे। असिदमादत्ते। यज्ञस्यघोषदसि। गार्हपत्यमुपतिष्ठते। प्रत्युष्टंरक्षःप्रत्युष्टाअरातयः। गार्हपत्येनिष्टपति। उर्वन्तरिक्षंप्रेहि। प्राचीनमुदीचीनंवाभिप्रव्रज्य। विष्णोस्तूपोसि। अभिप्रेतानामेकंस्तंबमुत्सृजति। देवानांपरिषूतमसिवर्षवृद्धमसि। अन्यंपरिषौति। पशूनान्त्वाभागमुत्सृजामि। परिषूतस्यैकांद्वेवादर्भनाड्यावुत्सृजति। इदंदेवानां। परिषूतानभिमृशति। इदंपशूनां। उत्सृष्टं। देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांबर्हिर्देवसदनमारभे। विशाखेष्वभिपद्यते। देवेभ्यस्त्वोर्ध्वबर्हिर्भ्यः। ऊर्ध्वमुन्मार्ष्टि। देवबर्हिर्मात्वान्वङ्मातिर्यक्पर्वतेराध्यासं। असिदंनिदधाति। याजाताओषधयोदेवेभ्यस्त्रियुगंपुरा। तासांपर्वराध्यासंपरिस्तरमाहरन्। अभिमन्त्र्य। आच्छेत्तातेमारिषं। आच्छिनत्त्यपउपस्पृश्य। सनखंमुष्टिंदातिसप्रस्तरः। एवंदेवस्यत्वेत्याद्याच्छेत्तातेमारिषमित्यन्तंप्रतिमुष्ट्यावर्तते। अयुजोयुजोवामुष्टीन्निधनानिवालुनोति। तूष्णींपरिभोजनीयमुलपराजीश्च। देवबर्हिःशतवल्शंविरोह। आलवानभिमृशति। सहस्रवल्शाविवयंरुहेम। आत्मानंप्रत्यभिमृश्यापउपस्पृश्य। अदित्यैरास्नासि। प्रदक्षिणंशुल्बमावेष्टयति। अयुपितायोनिः। प्रतिदधाति। त्रिधातुपंचधातुवाधातौधातौमंत्रमावर्तयति। पृथिव्यास्संपृचःपाहि। प्रागग्रमुदगग्रंवाशुल्वंनिदधाति। अपरिमितानांपरिमिताःसंनह्येसुकृतायकं। एनोमानिगांकतमच्चनाहंपुनरुत्थायबहुलाभवंतु। बर्हिरभिमंत्र्य। सुसंभृतांत्वासंभरामि। शुल्वेनिधनानिसंभरति। प्रतिनिधनंमंत्रावृत्तिः। अलुभितोयोनिः। उत्तमेनिधनेप्रस्तरमादधाति।

इंद्राण्यैसंनहनं। संनह्यति। पूषातेग्रन्थिंग्रथ्नातु। प्रदक्षिणंग्रन्थिमावेष्ट्य। सतेमास्थात्। पुरस्तात्प्रत्यंचमुपकर्षति। आपस्त्वामश्विनात्वामृषयःसप्तमामृजुः। बर्हिःसूर्यस्यरश्मिभिरुषसांकेतुमारभे। बर्हिरारभते। इन्द्रस्यत्वाबाहुभ्यामुद्यच्छे। उद्यच्छते। बृहस्पतेर्मूर्ध्नाहरामि। शीर्षन्नधिनिधायहरति। उर्वंतरिक्षंप्रेहि। प्रत्येति। अदित्याःसदआसीद। परिधिदेशेन्तर्वेद्यनधस्सादयति। अत्रपौर्णमास्यांव्रतं। विद्युदसीत्यादिव्रतपत्युपस्थानांतं। देवंगममसि। आसन्नमभिमंत्रयते। अदित्यास्त्वापृष्ठेसादयामि। गार्हपत्यदेशउपरिनिदधाति। प्रागग्रमुदगग्रंवाशुल्बंनिदधाति। यत्कृष्णोरूपंकृत्वाप्राविशस्त्वंवनस्पतीन्। ततस्त्वामेकविंशतिधा। संभरामिसुसंभृता। त्रीन्परिधींस्तिस्रःसमिधः। यज्ञायुरनुसंचरान्। उपवेषंमेक्षणंधृष्टिं। संभरामिसुसंभृता। शुल्वइध्मंसंभरति। कृष्णोस्याखरेष्ठोदेवंपुरश्चरसध्यासंत्वा। संनह्यति। पूषातेग्रन्थिंग्रथ्नातु। प्रदक्षिणंग्रन्थिमावेष्ट्य। सतेमास्थात्। पुरस्तात्प्रत्यंचमुपकर्षति। अदित्यास्त्वापृष्ठेसादयामि। बर्हिषासहनिदधाति। वेदोसियेनत्वंदेववेददेवेभ्योवेदोभवस्तेनमह्यंवेदोभूयाः। दर्भाणांवेदंकरोति। तृणात्प्रादेशेपरिवासयति। इध्मप्रव्रश्चनानिवेदपरिवासनानिचसहनिदधाति। अन्तर्वेदिशाखायाःपलाशानिप्रशात्यासर्वाणि। मूलतःपरिवास्य। उपवेषोसियज्ञाय। त्वांपरिवेषमधारयन्। इंद्रायहविःकृण्वंतः। शिवःशग्मोभवासिनः। तमुपवेषंकरोति। शाखारहितेयस्यकस्यचित्काष्ठस्योपवेषः। त्रिवृद्दर्भमयंपवित्रंकृत्वा। त्रिवृत्पलाशेदर्भः। इयान्प्रादेशसंमितः। यज्ञेपवित्रंपोतृतमं। पयोहव्यंकरोतुमे। मूलेमूलमुपसृजत्यग्रेग्रंनग्रन्थिंकरोति। वसूनांपवित्रमसिशतधारं। इतिवा। पर्वणियजमानःस्वयमग्निहोत्रंजुहोति। यवाग्वामावास्यायांसन्नयतः। तस्यउच्छेषणमातंचनार्थंनिदधाति। अध्वर्युः। सायंहुतेग्निहोत्रे। उत्तरेणगार्हपत्यन्दर्भान्स्तीर्यद्वन्द्वंसान्नाय्यपात्राणिप्रक्षाल्यन्यंचिप्रयुनक्ति। अग्निहोत्रहवणीमुखामुपवेषंशाखापवित्रमभिधानींनिदानेदोहनपात्रंपिधानार्थपात्रमिति।

समावप्रच्छिन्नाग्रौदर्भौप्रादेशमात्रौपवित्रेकरोति। पवित्रेस्थोवैष्णवी। वायुर्वोमनसापुनातु। तृणंकाष्ठंवान्तर्धायच्छिनत्तिननखेन। अपउपस्पृश्य। इमौप्राणापानौ। यज्ञस्यांगानिसर्वशः। आप्यायंतौसंचरतां। पवित्रेहव्यशोधने। अभिमंत्र्य। विष्णोर्मनसापूतेस्थः। अद्भिरुन्मार्ष्टि। गांदोहपवित्रेरज्जुंसर्वापात्रणिशुंधत। संप्रेष्यति। अग्निहोत्रहवण्यांपवित्रांतर्हितायामपआनीय। देवोवःसवितोत्पुनातु। अच्छिद्रेणपवित्रेण। वसोःसूर्यस्यरश्मिभिः। उदगग्राभ्यांपवित्राभ्यांत्रिरुत्पुनाति।

आपोदेवीरग्रेपुवोअग्रेगुवोग्रइमंयज्ञंनयताग्रेयज्ञपतिंधत्तयुष्मानिंद्रोवृणीतवृत्रतूर्येयूयमिंद्रमवृणीध्वंवृत्रतूर्येप्रोक्षिताःस्थ। अनुमन्त्रयते। उत्तानानिपात्राणिकृत्वा। शुन्धध्वंदैव्यायकर्मणे। त्रिःसर्वाभिरद्भिःप्रोक्षति।

एताआचरंतिमधुमद्दुहानाःप्रजावतीर्यशसोविश्वरूपाः। बह्वीर्भवंतीरुपजायमानाइहवइंद्रौरमयतुगावः। गाआयतीःप्रतीक्षते। धृष्टिरसिब्रह्मयच्छ। उपवेषमादाय। निरूढंजन्यंभयश्सहतेनयंद्विष्मःसुभूतायश्रयध्वं। तेनगार्हपत्यादुदीचोंगारान्निरूह्य। मातरिश्वनोघर्मोसिद्यौरसिपृथिव्यसिविश्वधायाअसिपरमेणधाम्नादृश्हस्वमाह्वाः। तेषुकुंभीमधिश्रयति। भृगूणामंगिरसांतपसातप्यस्व। अंगारैःपरींधे। उपसृष्टांमेप्रब्रूतात्। संप्रेष्यति। वसूनांपवित्रमसिसहस्रधारं। कुंभ्यांप्रागग्रश्शाखापवित्रमादधाति। उदक्प्रातः। अन्वारभ्यवाचश्यच्छतिधारयन्नास्ते। अदित्यैरास्नासि। अभिधानीमादत्ते। तूष्णींनिदाने। पूषासि। वत्समुपसृजति। दोग्धाह। उपसृष्टा। विहारंगांचोपसृष्टामंतरेणमासंचारिष्ट। संप्रेष्यति। अयक्ष्मावःप्रजयासश्सृजामिरायस्पोषेणबहुलाभवंतीः। उपसृष्टामनुमंत्रयते। ऊर्जंपयःपिन्वमानाघृतंचजीवोजीवंतीरुपवःसदेयं। उपसन्नां। द्यौश्चेमंयज्ञंपृथिवीचसंदुहातांधातासोमेनसहवातेनवायुः। यजमानायद्रविणंदधातु। दुह्यमानां। उत्संदुहन्तिकलशंचतुर्बिलमिडांदेवीमधुमतीश्सुवर्विदं। तदिंद्राग्नीजिन्वतश्सूनृतावत्तद्यजमानममृतत्वेदधातु। धाराघोषमनुमंत्रयते। दोग्धाहरतितंपृच्छति। कामंधुक्षःप्रणोब्रूहींद्रायहविरिंद्रियं। महेंद्रायेतिवा। गंगांयस्यांदेवानांमनुष्याणांपयोहितं। गोधुगाचष्टे। साविश्वायुः। प्रत्युच्य। देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुपुवा। कुंभ्यामानयति। एवंपूषासीत्यादियदन्यत्संप्रैषात्तेनोत्तरेदोहयति। यमुनांयस्यांदेवानांमनुष्याणांपयोहितं। साविश्वव्यचाः। द्वितीयां। सरस्वतींयस्यांदेवानांमनुष्याणांपयोहितं। साविश्वकर्मा। तृतीयां। तिस्रोदोहयित्वा। बहुदुग्धींद्रायदेवेभ्योहव्यमाप्यायतांपुनः। वत्सेभोमनुष्योभ्यः। पुनर्दोहायकल्पतां। त्रिःसंप्रेष्यति। विसृष्टवागगनन्वारभ्योत्तरादोहयति। तूष्णींवा। सर्वासुदुग्धासु। हुतःस्तोकोहुतोद्रप्सोग्नयेबृहतेनाकायस्वाहाद्यावापृथिवीभ्यां। विप्रुषोनुमंत्रयते। द्यौश्चेमंयज्ञंपृथिवीचसंदुहातांधातासोमेनसहवातेनवायुः। यजमानायद्रविणंदधातु। सान्नाय्यं। दोहनश्संक्षाल्य। संपृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमामंद्राधनस्यसातये। कुंभ्यामानयति। श्रपयित्वा। तूष्णीकेनसर्पिषाभिघार्य। दृश्हगाद्दृश्हगोपामतिंमावोयज्ञपतीरिषत्। कर्षन्निवोदगुद्वासयति। सोमेनत्वातनच्मींद्रायदधि। महेंद्रायदधिइतिवा। शीतंबुध्नंकृत्वातनक्ति। यज्ञस्यसंततिरसियज्ञस्यत्वासंततिमनुसंतनोमि। अग्निहोत्रोच्छेषणमानयति। आपोहविष्युजागृतयथादेवेषुजाग्रथ। एवमस्मिन्यज्ञेयजमानायजागृत। अपिधानार्थेपात्रेपआनयति। अदस्तमसिविष्णवेत्वायज्ञायापिदधाम्यहं। अद्भिररिक्तेनपात्रेणयाःपूताःपरिशेरते। अपिदधाति। यदिमृन्मयंस्यात्तृणंकाष्ठंवानुप्रविध्येत्। इमौपर्णंचदर्भंचदेवानाश्हव्यश्शोधनौ। प्रातर्वेषायगोपायविष्णोहव्यश्हिरक्षसि। उन्मुच्यशाखापवित्रप्रज्ञातंनिदधाति। तूष्णीश्शमीमयीं। विष्णोहव्यश्रक्षस्व। सान्नाय्यंगार्हपत्यदेशउपरिनिदधाति।

अन्याꣳशाखामाहृत्यतयादर्भैर्वाप्रातर्दोहायवत्सानपाकरोति। परिस्तृणीतपरिधत्ताग्निं। परिहितोग्निर्यजमानंभुनक्तु। अपाꣳरसओषधीनाꣳसुवर्णोनिष्काइमेयजमानस्यसंतुकामदुघाअमुत्रामुष्मिंल्लोके। संप्रेष्यति। उदगग्रैःप्रागग्रैश्चदर्भैरग्नीन्परिस्तृणाति। आहवनीयंपरिस्तीर्यगार्हपत्यमथदक्षिणाग्निं। यजमानः। उभावग्नीउपस्तृणतेदेवताउपवसंतुमे। अहंग्राम्यानुपवसामिमह्यंगोपतयेपशून्। सायंपरिस्तीर्यमाणेषुजपति। एतत्कृत्वोपवसत्यमायां। पौर्णमास्यांतुपूर्वेद्युरग्न्यन्वाधानमग्निपरिस्तरणंच। श्वोभूतइध्माबर्हिर्वेदंचकरोति। सद्योवासर्वंकरोति। सद्यस्कालायामुपरिष्टाद्वेदकर्मणोग्नीन्परिस्तृणाति। प्रातरग्निहोत्रꣳहुत्वोदितआदित्येपौर्णमास्यास्तंत्रंप्रक्रमयति। प्रागुदयादमावास्यायाः। अध्वर्युः। कर्मणेवांदेवेभ्यःशकेयं। पाणीप्रक्षाल्य। यज्ञस्यसंततिरसियज्ञस्यत्वासंतत्यैस्तृणामिसंतत्यैत्वायज्ञस्य। गार्हपत्यातसंततामुलपराजिꣳस्तृणात्याहवनीयात्। तूष्णींदक्षिणांतूष्णीमुत्तरां। दक्षिणेनाहवनीयंब्रह्मयजमानयोःसदनेकरोति। पूर्वंब्रह्मणेपरंयजमानाय। उत्तरेणगार्हपत्यंदर्भान्सꣳस्तीर्यद्वंद्वंपात्राणिप्रक्षाल्यन्यंचिप्रयुनक्ति। स्फ्यंकपालानि। अग्निहोत्रहवणीꣳशूर्पं। कृष्णाजिनꣳशम्यां। उलूखलंमुसलं। दृषदमुपलं। स्रुवंजुहूं। उपभृतंध्रुवां। आज्यस्थालींकुटरुं। पात्रींमेक्षणं। वेदंप्राशित्रहरणं। प्रणीताप्रणयनमिडापात्रं। एकामन्वाहार्यस्थालीं। संनयतोयजमानस्यप्रातर्दोहपात्राणिषट्। उखामुपवेषं। शाखापवित्रमभिधानीं। निदानेदोहनपात्रं। मदन्तींयोक्त्रं। चतुर्धाकरणपात्राणियजमानभागपात्रं। वेदाग्राणीध्मप्रव्रश्चनानि। अंतर्धानकटंफलीकरणंपिष्टलेपपात्रं। अत्रासंनयतः?वित्रेकरोति। पूर्वेद्युःकृतेसंनयतोधार्येते। यजमानः। भूपतेभुवनपतेमहतोभूतस्यपतेब्रह्माणंत्वावृणीमहे। ब्रह्मा। अहंभूपतिरहंभुवनपतिरहंमहतोभूतस्यपतिर्देवेनसवित्राप्रसूतआर्त्विज्यंकरिष्यामिदेवसवितरेतंत्वावृणतेबृहस्पतिंदैव्यंब्रह्माणंतदहं मनसेप्रब्रवीमिमनोगायत्रियैगायत्रीत्रिष्टुभेत्रिष्टुब्जगत्यैजगत्यनुष्टुभेनुष्टुब्बृहत्यैबृहतीपंक्त्यैपंक्तिःप्रजापतयेप्रजापतिर्विश्वेभ्योदेवेभ्यो विश्वेदेवाबृहस्पतयेबृहस्पतिर्देवानांब्रह्माहंमनुष्याणांभूर्भुवःसुवः। वृतोजपति। वाचस्पतेयज्ञंगोपाय। अपरेणाहवनीयंदक्षिणातिक्रम्य। अहेदैधिषव्योदतस्तिष्ठान्यस्यसदनेसीदयोस्मत्पाकतरः। ब्रह्मसदनात्तृणंनिरस्यापउपस्पृश्य। उन्निवतउदुद्वतश्चगेषंपातंमाद्यावापृथिवीअद्याहः। उपविशति। इदमहमर्वाग्वसोःसदनेसीदामिप्रसूतोदेवेनसवित्राबृहस्पतेःसदनेसीदामितदग्नयेप्रब्रवीमितद्वायवेतत्सूर्यायतत्पृथिव्यै। आहवनीयमभिमुखउपविशति। यजमानः। अपरेणाहवनीयंदक्षिणातिक्रम्यतूष्णींनिरसनादिकृत्वास्वायतनउपविशति। अध्वर्युः। दक्षायत्वा। प्रणीताप्रणयनंचमसमादत्ते। वानस्पत्योसिदेवेभ्यःशुंधस्व। वानस्पत्योसिदेवेभ्यःशुंभस्व।

वानस्पत्यौसिदेवेभ्यःशुध्यस्व। त्रिःप्रक्षालयति। अपरेणगार्हपत्यमुपविश्य। कोवोगृह्णातिसवोगृह्णातुकस्मैवोगृह्णामितस्मैवोगृह्णातुपोषायवः। पवित्रांतर्हितेपात्रेपआनयति। अनयापृथिव्यावोगृह्णामि। उपबिलंपूरयित्वाप्रोक्षणीवदुत्पूयाभिमंत्रयते। ब्रह्मन्नपःप्रणेष्यामियजमानवाचंयच्छ। संप्रेष्यति। ब्रह्मा। प्रणययज्ञंदेवतावर्धयैतानाकस्यपृष्ठेयजमानोअस्तु। सप्तर्षीणाꣳसुकृतांयत्रलोकस्तत्रेमंयज्ञंयजमानंचधेहि। ॐप्रणय। प्रसौति। यजमानोवाचंयच्छत्याहविष्करणात्। अध्वर्युः। प्रसवउक्तेप्रणयन्वाचंयच्छति। ताꣳहविष्कृताविसृजते। कोवःप्रणयतिसवःप्रणयत्वपोदेवीःप्रणयामियज्ञꣳसꣳसादयन?तुनः। इरंमदन्तीर्घृतपृष्ठाउदाकुःसहस्रपोषंयजमानेन्यंचतीः। स्फ्येनोपयम्यसमंप्राणैर्धारयमाणोदक्षिणेनाहवनीयमविषिंचन्हरति। यजमानः। भूश्चकश्चवाक्चर्क्चगौश्चवट्चखंचधूꣳश्चनूꣳश्चपूꣳश्चैकाक्षराःपूर्दशमाविराजोयाइदंविश्वंभुवनंव्यानशुस्तानोदेवीस्तरसासंविदानास्वस्ति यज्ञंनयतुप्रजानतीः। प्रणीताःप्रणीयमानाअनुमंत्रयते। अध्वर्युः। ब्रह्मपूतास्थकोवोयुनक्तिसवोयुनक्तुविश्वेभ्यःकामेभ्योदेवयज्यायै। उत्तरेणाहवनीयंदर्भेषुसादयित्वादर्भैरपिदधाति। यजमानः। ब्रह्मपूतास्थकोवोयुनक्तिसवोयुनक्तुविश्वेभ्यःकामेभ्योदेवयज्यायै। साद्यमानाः। कस्त्वायुनक्ति?त्वायुनक्तु। यज्ञंयुनक्ति। अध्वर्युः। यथेतंप्रत्येत्यस्फ्यंपात्रैःसहनिधाय। संविशंतादैवीर्विशःपात्राणिदेवयज्यायै। संभवताꣳसकृन्मंत्रः। असंभवतांमंत्रावृत्तिः। दक्षायवानस्पत्यासि। अग्निहोत्रहवणीमादत्ते। ताꣳसव्येकृत्वा। वेषायत्वा। शूर्पं। प्रत्युष्टꣳरक्षःप्रत्युष्टाअरातयः। आहवनीयेगार्हपत्येवानिष्टपति। यजमानहविर्निर्वप्स्यामि। यजमानमामंत्रयते। ॐनिर्वप। प्रत्याह। अध्वर्युः। उर्वंतरिक्षमन्वेमि। गच्छति। अपरेणगार्हपत्यमुपविश्य। व्रीहिमतींयवमतींवापात्रींनिधाय। दक्षिणतःस्फ्यमुपकृष्यसर्वान्छकटमंत्रान्जपेत्। धूरसिधूर्वधूर्वंतंधूर्वतंयोस्मान्धूर्वतितंधूर्वयंवयंधूर्वामः। त्वंदेवानामसिसस्नितमंपप्रितमंजुष्टतमंवह्नितमंदेवहूतमं। विष्णुस्त्वाक्रꣳस्त। अहुतमसिहविर्धानंदृꣳहस्वमाह्वाः। मित्रस्यत्वाचक्षुषाप्रेक्षेमाभेर्मासंविक्थामात्वाहिꣳसिषं। उरुवाताय। मित्रस्यत्वाचक्षुषाप्रेक्षेमाभेर्मासंविक्थामात्वाहिꣳसिषं। पुरोडाश्यान्प्रेक्षते। ऊर्जंधत्स्व। पुरोडाश्यानभिमृशति। पयोमयिधेहि। आत्मानंप्रत्यभिमृश्यापउपस्पृश्य। अपहतꣳरक्षः। ततस्तृणंलोष्ठंवानिरस्यापउपस्पृश्य। चित्तिस्स्रुक्। चित्तमाज्यं। वाग्वेदिः। आधीतंबर्हिः। केतोअग्निः। विज्ञातमग्निः। वाक्पतिर्होता। मनउपवक्ता। प्राणोहविः। सामाध्वर्युः। दशहोतारंव्याख्यायशूर्पेपवित्रेनिधाय। यच्छंतांपंचगोपीथायवोनारातये। मुष्टिंपूरयित्वास्रुच्योप्य। देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नयेजुष्टंनिर्वपामि। पवित्रांतहितेशूर्पेचतुरोमुष्टीन्निर्वपति।

त्रिर्यजुषातूष्णींचतुर्थं। यजमानः। अग्निश्होतारमिहतश्हुंवेदेवान्यज्ञियान्निहयान्हवामहे। आयंतुदेवाःसुमनस्यमानावियंतुदेवाहविषोमेअस्य। हविर्निरुप्यमाणमनुमंत्रयते। अध्वर्युः। निरुप्यान्वावपति। एतेनैवकल्पेनयथादेवतमुत्तरं। इदंदेवानां। निरुप्तानभिमृशति। इदमुनःसह। यतोधिनिर्वपति। स्फात्यैत्वानारात्यै। निरुप्तानेव। पुरोडाश्यानादाय। इदमहंनिर्वरुणस्यपाशात्। उपनिस्सर्पति। सुवरभिविख्यैषं। सर्वंयज्ञमनुवीक्षते। वैश्वानरंज्योतिः। आहवनीयंपरेक्षते। दृश्हंतांदुर्याद्यावापृथिव्योः। जपति। स्वाहाद्यावापृथिवीभ्यां। स्कन्नानभिमन्त्रयते। उर्वन्तरिक्षमन्विहि। गच्छति। अदित्यास्त्वोपस्थेसादयामि। अपरेणाहवनीयमपरेणवागार्हपत्यमुपसादयति। अग्नेहव्यश्रक्षस्व। अग्नीषोमौहव्यश्रक्षेथाम्। इन्द्रवैमृधहव्यश्रक्षस्व। यथादेवतंपरिददाति। सशूकायाश्स्रुच्यपआनीयपूर्ववदुत्पूयाभिमंत्र्य। ब्रह्मन्प्रोक्षिष्यामि। ब्रह्माणमामंत्रयते। ब्रह्मा। प्रोक्षयज्ञंदेवतावर्धयैतानाकस्यपृष्ठेयजमानोअस्तु। सप्तर्षीणाश्सुकृतांयत्रलोकस्तत्रेमंयज्ञंयजमानंचधेहि। ॐप्रोक्ष। अध्वर्युः। देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नयेवोजुष्टंप्रोक्षाम्यग्नीषोमाभ्यामिन्द्रायवैमृधाय। यथादेवतंत्रिःप्रोक्षति। सकृन्मंत्रेणद्विस्तूष्णीं। उत्तानानिपात्राणिकृत्वा। शुन्धध्वन्दैव्यायकर्मणेदेवयज्यायै। त्रिःप्रोक्षति। प्रोक्षणीशेषमग्रेणगार्हपत्यंनिदधाति। वातस्यध्राजिरसि। कृष्णाजिनमादत्ते। अवधूतश्रक्षोवधूताअरातयः। ऊर्ध्वग्रीवंबर्हिर्विशसनमुत्करेत्रिरवधूनोति। अदित्यास्त्वगसि। अपरेणोत्करंप्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति। प्रतित्वापृथिवीवेत्तु। पुरस्तात्प्रतीचींभसदमुपसमस्यति। अधिषवणमसिवानस्पत्यंप्रतित्वादित्यास्त्वग्वेत्तु। अनुत्सृजन्कृष्णाजिनमुलूखलमधिवर्तयति। अग्नेस्तनूरसिवाचोविसर्जनंदेववीतयेत्वागृह्णामि। अनुत्सृजन्नुलूखलेहविरावपति। त्रिर्यजुषातूष्णींचतुर्थं। अद्रिरसिवानस्पत्यःसइदंदेवेभ्योहव्यश्सुशमिशमिष्व। मुसलमादत्ते। अवरक्षोदिवःसपत्नंवध्यासं। त्रिरवहन्ति। हविष्कृदेहि। त्रिरवघ्नन्हविष्कृतमाह्वयति। उच्चैःसमाजहि। संप्रेष्यति। आग्नीध्रः। अद्रिरसिश्लोककृत्। अश्मानमादत्ते। तूष्णींवाशम्यां। इषमावद। ऊर्जमावद। द्युमद्वदतवयश्संघातञ्जेष्म। तेनदृषदुपलेसमाहंति। द्विर्दृषदिसकृदुपलायां। त्रिःसंचारयन्नवकृत्वःसंपादयति। अध्वर्युः। वर्षवृद्धमसि। पुरस्ताच्छूर्पमुपोहति। वर्षवृद्धास्थ। पुरोडाश्यानभिमृशति। प्रतित्वावर्षवृद्धंवेत्तु। उद्वपति। परापूतश्रक्षःपरापूताअरातयः। उत्करेत्रिर्निष्पुनाति। पराध्माताअमित्राः। शूर्पात्तुषान्प्रध्वश्सयति। पुरोडाशकपालंतुषैःपूरयित्वा। रक्षसांभागोसि। अधस्तात्कृष्णाजिनस्योपवपति। नान्वीक्षते। अवबाढश्रक्षः। अवबाधते। अपउपस्पृश्याभ्युक्षकपालंनिदधाति। वायुर्वोविविनक्तु। विविनक्ति। देवोवःसविताहिरण्यपाणिःप्रतिगृह्णातु। पात्र्यांतंडुलान्प्रस्कंदयति। तानादायोलूखलेनिक्षिप्य। त्रिष्फलीकर्तवै। संप्रेष्यति।

अत्रवाचंविसृजते। पत्नीकतिपयकृत्वोवहंत्यन्यस्मैप्रयच्छेत्सोतऊर्ध्वमवहन्ति। देवेभ्यःशुन्धध्वं। देवेभ्यःशुंभध्वं। देवेभ्यःशुध्यध्वं। पत्नीत्रिष्फलीकरोति। अध्वर्युः। निदधातिफलीकरणान्। प्रक्षाल्यतंडुलान्। त्रिष्फलीक्रियमाणानांयोन्यंगोअवशिष्यते। रक्षसांभागधेयमापस्तत्प्रवहतादितःस्वाहा। अन्तर्वेदिप्रक्षालनन्निनयति। यजमानः। रक्षोभ्यइदंनमम। अपउपस्पृश्य। अध्वर्युः। वातस्यध्राजिरसीत्यादिअनुसृजन्कृष्णाजिनं। दिवस्कंभनिरसिप्रतित्वादित्यास्त्वग्वेत्तु। कृष्णाजिनउदीचीनकुंबाश्शम्यांनिदधाति। धिषणासिपर्वत्याप्रतित्वादिवःस्कंभनिर्वेत्तु। तस्यांदृषदमधिवर्तयति। धिषणासिपार्वतेयीप्रतित्वापर्वतिर्वेत्तु। दृषद्युपलां। अश्शवस्थमधुमंतः। तंडुलानवेक्षते। देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामधिवपामिधान्यमसिधिनुहिदेवान्। दृषदितंडुलानधिवपति। त्रिर्यजुषातूष्णींचतुर्थं। प्राणायत्वा। प्राचीमुपलांप्रोहति। अपानायत्वा। प्रतीचीं। व्यानायत्वा। मध्यदेशेव्यवस्थापयति। दीर्घामनुप्रसितिमायुषेधां। प्राचीमन्ततः। यथासुखमतऊर्ध्वश्संततंपिनष्टि। देवोवःसविताहिरण्यपाणिःप्रतिगृह्णातु। कृष्णाजिनेपिष्टानिप्रस्कंदयति। अदब्धेनवश्चक्षुषावेक्षे। अवेक्षते। अव्यवकिरंतीपिश्षाणूनिकुरुतात्। संप्रेष्यति। पत्नीपिनष्टि। पिष्टलेपंप्रज्ञातंनिदधाति। अत्रमदंतीरधिश्रयति। आहवनीयेगार्हपत्येवाहवीश्षिश्रप्यन्ते। धृष्टिरसिब्रह्मयच्छ। उपवेषमादाय। तेनप्रत्यंचावंगारौनिर्वर्तयति। अपाग्नेग्निमामादंजहिनिष्क्रव्याद्श्सेध। अन्यतरमुत्तरापरमवान्तरदेशंनिरस्य। अपउपस्पृश्य। आदेवयजंवह। अवशिष्टमवस्थाप्य। ध्रुवमसिपृथिवींदृश्हायुर्दृश्हप्रजांदृश्हसजातानस्मैयजमानायपर्यूह। तस्मिन्कपालमुपदधाति। निर्दग्धश्रक्षोनिर्दग्धाअरातयः। तस्मिन्नंगारमधिवर्तयति। धर्त्रमस्यंतरिक्षंदृश्हप्राणंदृश्हापानंदृश्हसजातानस्मैयजमानायपर्यूह। तस्मात्पूर्वं। धरुणमसिदिवंदृश्हचक्षुर्दृश्हश्रोत्रंदृश्हसजातानस्मैयजमानायपर्यूह। तस्मात्पूर्वं। धर्मासिदिशोदृश्हयोनिंदृश्हप्रजांदृश्हसजातानस्मैयजमानायपर्यूह। दक्षिणपूर्वं। मरुताश्शर्धः। दक्षिणापरं। यंत्रमस्याशादृश्हरयिंदृश्हपोषंदृश्हसजातानस्मैयजमानायपर्यूह। उत्तरापरं। विश्वाभ्यस्त्वाशाभ्योछिद्रश्सजातवनस्यायाउपदधामि। उत्तरपूर्वं। चिदसि। अवशिष्टमुत्तरतः। एकादशकपालस्ययथाष्टाकपालस्यैवंत्रीण्युपधाय। चिदसि। तृतीयात्पूर्वं। धर्मासिदिशोदृश्हयोनिंदृश्हप्रजांदृश्हसजातानस्मैयजमानायपर्यूह। दक्षिणपूर्वं। मरुताश्शर्धः। दक्षिणापरं। यंत्रमस्याशादृश्हरयिंदृश्हपोषंदृश्हसजातानस्मैयजमानायपर्यूह। उत्तरापरं। विश्वाभ्यस्त्वाशाभ्योछिद्रश्सजातवनस्यायाउपदधामि। उत्तरपूर्वं। चितस्थप्रजामस्मैरयिमस्मैसंजातानस्मैयजमानायपर्यूह।

मध्यमात्त्रीण्युत्तरतः। प्रागपवर्गं। द्वादशकपालस्याप्येवं। भृगूणामंगिरसान्तपसातप्यध्वं। वेदेनकपालेष्वंगारानध्यूहति।
प्रतिकपालयोगंमंत्रावृत्तिः। अत्रप्रातर्दोहंदोहयतिनिरूढमित्यादिसंपृच्यध्वमित्यंतं। पात्रींनिष्टप्योपवातायां।
देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याꣳसंवपामि। तिरःपवित्रंकृष्णाजिनात्पिष्टानिसंव्वपति। त्रिर्यजुषातूष्णींचतुर्थं।
संवपन्वाचंयच्छत्यधिवासयन्विसृजते। हर्योस्त्वावाराभ्यामुत्पुनामि। उदगग्राभ्यांपवित्राभ्यांपिष्टानित्रिरुत्पुनाति।
स्रुवेणप्रणीतानामादायवेदेनोपयम्य। समापोअद्भिरग्मतसमोषधयोरसेनसꣳरेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिःसृज्यध्वं।
पिष्टेष्वानयति। अद्भ्यःपरिप्रजातास्थ। तप्ताआनयति। समद्भिःपृच्यध्वं। प्रदक्षिणमनुपरिप्लावयति। जनयत्यैत्वासंयौमि।
मेक्षणेनसंयौति। मखस्यशिरोसि। पिंडंकरोति। यथाभागंव्यावर्तेथां। विभजति। बहुषुयथाभागंव्यावर्तध्वं। समौपिंडौकृत्वा।
इदमग्नये। आग्नेयमभिमृशति। इदमग्नीषोमाभ्यां। इदमिन्द्रायवैमृधाय। इदमिन्द्राग्निभ्यां। यथादेवतं।
इदमहꣳसेनायाअभीत्वर्यैमुखमपोहामि। वेदेनदक्षिणस्माकपालयोगादङ्गारानपोह्योत्तरस्मादपोहति। मखस्यशिरोसि।
दक्षिणंपिंडमादाय। घर्मोसिविश्वायुः। दक्षिणेकपालयोगेधिश्रयति। एवमुत्तरं।
अतुंगमनपूपाकृतिमश्वशफमात्रंकूर्मस्येवप्रतिकृतिंकरोति। उरुप्रथस्वोरुतेयज्ञपतिःप्रथतां। प्रथयति। पात्र्यामपआनीय।
त्वचंगृह्णीष्व। प्रदक्षिणमनतिक्षारयन्लेपेनानुपरिमार्ष्टि। अंतरितꣳरक्षोन्तरिताअरातयः। उल्मुकेनत्रिःपर्यग्निकरोति।
सकृन्मंत्रेणद्विस्तूष्णीं। देवस्त्वासविताश्रपयतुवर्षिष्ठेअधिनाके। दर्भैरभिज्वलयति। अग्निस्तेतनुवंमातिधागग्नेहव्यꣳरक्षस्व।
उल्मुकैःपरितपति। संब्रह्मणापृच्यस्व। वेदेनसांगारंभस्माध्यूहति। अविदहंतःश्रपयत। संप्रेष्यति। अत्रवाचंविसृजते।
अंगुलिप्रक्षालनंपात्रीनिर्णेजनंचोल्मुकेनाभितप्यापरेणाहवनीयमपरेणवागार्हपत्यꣳस्फ्येनोदीचीस्तिस्रोरेखाःकृत्वा।
एकतायस्वाहा। एकतायेदंनमम। द्वितायस्वाहा। द्वितायेदंनमम। त्रितायस्वाहा। त्रितायेदंनमम।
पश्चात्पश्चादसꣳस्पंदयꣳस्त्रिर्निनयति। अपरेणाहवनीयंयजमानमात्रींवेदिंकरोति। यावदर्थांतिरश्चीं। यजमानः।
इदंतस्मैहर्म्यंकरोमियोवोदेवाश्चरतिब्रह्मचर्यं। मेधावीदिक्षुमनसातपस्व्यंतर्दूतश्चरतिमानुषीषु। वेदिदेशमभिमृशति। अध्वर्युः।
वेदेनवेदिंविविदुःपृथिवीꣳसापप्रथेपृथिवीपार्थिवानि। गर्भंबिभर्तिभुवनेष्वंतस्ततोयज्ञोजायतेविश्वदानिः।
पुरस्तात्स्तंबयजुषोवेदेनवेदिंत्रिःसंमार्ष्टि। सकृन्मंत्रेणद्विस्तूष्णीं। यजमानः।
चतुःशिखंडायुवतिःसुपेशाघृतप्रतीकाभुवनस्यमध्ये। मर्मृज्यमानामहतेसौभगायमह्यंधुक्ष्वयजमानायकामान्।
वेदेनवेदिंबृहतीमविंदन्त्सापृथिव्यांप्रथतांपार्थिवानि। तस्यांबर्हिःप्रथताꣳसाध्वंतरहिꣳस्राणःपृथिवीदेव्यस्तु।
वेदेनवेदिंविविदुःपृथिवीꣳसापप्रथेपृथिवीपार्थिवानि। गर्भंबिभर्तिभुवनेष्वंतस्ततोयज्ञोजायतेविश्वदानिः।

वेदिँसंमृज्यमानामनुमंत्रयते। अध्वर्युः। देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामाददे। दर्भद्वययुतँस्फ्यमादाय। इंद्रस्यबाहुरसिदक्षिणः। अभिमंत्रयते। सहस्रभृष्टिःशततेजावायुरसितिग्मतेजाः। तस्यदर्भेणाग्रमुन्मार्ष्टि। पृथिव्यैवर्मासि। पूर्वार्धेवेदेर्वितृतीयदेशेप्रागग्रमुदगग्रंवादर्भंनिदधाति। पृथिविदेवयजन्योषध्यास्तेमूलंमाहिँसिषं। तस्मिन्स्फ्येनप्रहरति। अपउपस्पृश्य। अपहतोररुःपृथिव्यै। स्फ्येनसतृणान्पाँसूनपादत्ते। व्रजंगच्छगोस्थानं। हरति। यजमानः। योमाह्हृदामनसायश्चवाचायोब्रह्मणाकर्मणाद्वेष्टिदेवाः। यःश्रुतेनहृदयेनेष्णताचतस्येंद्रवज्रेणशिरश्छिनद्मि। स्तंबयजुर्ह्रियमाणमनुमंत्रयते। अध्वर्युः। वर्षतुतेद्यौः। वेदिंप्रतीक्षते। वर्षतुतेपर्जन्यः। यजमानं। आग्नीध्रः। नमोदिवेनमःपृथिव्यै। उत्तरतउत्तानौहस्तौकृत्वोपविशतिप्रक्रमेवेदेः। अध्वर्युः। बधानदेवसवितःपरमस्यांपरावतिशतेनपाशैर्योस्मान्द्वेष्टियंचवयंद्विष्मस्तमतोमामौक्। तस्माउपनिवपति। आग्नीध्रः। अवबाढोदुरस्युः। अभिगृह्णात्यंजलिनापरिगृह्यास्ते। अध्वर्युः। मावःशिवाओषधयोमूलँहिँसिषं। द्वितीयंप्रहरति। अपहतोररुःपृथिव्यैदेवयजन्यै। द्वितीयमपादत्ते। व्रजंगच्छेत्यादिपूर्ववत्। आग्नीध्रः। अवबाढोदेवयजन्यायातुधानाः। द्वितीयमभिगृह्णाति। अध्वर्युः। द्रप्सस्तेदिवंमास्कान्। तृतीयंप्रहरति। अपहतोररुःपृथिव्याअदेवयजनः। तृतीयमपादत्ते। व्रजंगच्छेत्यादिपूर्ववत्। आग्नीध्रः। अवबाढोघशँसः। तृतीयमभिगृह्णाति। अध्वर्युः। तूष्णींचतुर्थँहरन्सर्वंदर्भशेषँहरति। आग्नीध्रः। अररुस्तेदिवंमास्कान्। चतुर्थमभिगृह्णाति। अध्वर्युः। स्फ्येनवेदिंपरिगृह्णाति। वसवस्त्वापरिगृह्णंतुगायत्रेणछंदसा। दक्षिणतःप्राचींलेखांलिखति। रुद्रास्त्वापरिगृह्णंतुत्रैष्टुभेनछंदसा। पश्चादुदीचीं। आदित्यास्त्वापरिगृह्णंतुजागतेनछंदसा। उत्तरतःप्राचीं। यजमानः। बृहस्पतेपरिगृहाणवेदिँस्वगावोदेवाःसदनानिसंतु। तस्यांबर्हिःप्रथताँसाध्वंतरहिँस्राणःपृथिवीदेव्यस्तु। जपति। अध्वर्युः। प्रांचौवेद्यँसावुन्नयत्यभितआहवनीयंप्रतीचीश्रोणीअभिगार्हपत्यंमध्येसंनताभवति। इमांनराःकृणुतवेदिमेत्यवसुमतीँरुद्रवतीमादित्यवतींवर्ष्मन्दिवोनाभापृथिव्यायथायंयजमानोनरिष्यादेतदेवेभ्योजुष्टामदित्याउपस्थइमांदेवाअजुषन्तसर्वेरायस्पोषायजमानंविशंतु। संप्रेष्यति। आग्नीध्रः। अपहतोररुःपृथिव्याआदेवयजंवह। स्फ्येनोत्तमांत्वचमुद्धत्योत्करेनिवपति। यजमानः। यदुद्धंतोजिहिँसिमपृथिवीमोषधीरपः। अध्वर्यवःस्फ्यकृतस्फ्येनांतरिक्षंमोरुपावतस्मात्। यदुद्धंतोजिहिँसिमजीवमस्यावेदिंचकृमामनसादेवयंतः। मातेनहेडउपगामभूम्याःशिवानोविश्वैर्भुवनेभिरस्तु। स्फ्येनोत्तमांत्वचमुद्धन्यमानां। आग्नीध्रः। देवस्यसवितुःसवेकर्मकृण्वंतिवेधसः। खनति। अपउपस्पृश्य। अध्वर्युः। ब्रह्मन्नुत्तरंपरिग्राहंपरिग्रहीष्यामि। ब्रह्माणमामंत्रयते।

पंचानांत्वर्तूनांयंत्रायधर्त्रायगृह्णामि। 1। पंचानांत्वादिशांयंत्रायधर्त्रायगृह्णामि। 2। पंचानांत्वापंचजनानांयंत्रायधर्त्रायगृह्णामि। 3। चरोस्त्वापंचबिलस्ययंत्रायधर्त्रायगृह्णामि। 4। ब्रह्मणस्त्वातेजसेयंत्रायधर्त्रायगृह्णामि। 5। क्षत्रस्यत्वौजसेयंत्रायधर्त्रायगृह्णामि। 6। विशेत्वायंत्रायधर्त्रायगृह्णामि। 7। सुवीर्यायत्वागृह्णामि। 8। अष्टावल्पिष्ठमुपभृति। यजमानोप्येतैरेवानुमंत्रयते। अध्वर्युः। भूमौप्रतिष्ठितायांध्रुवायां। सुप्रजास्त्वायत्वागृह्णामि। 1। रायस्पोषायत्वागृह्णामि। 2। ब्रह्मवर्चसायत्वागृह्णामि। 3। भूरस्माकꣳहविर्देवानामाशिषोयजमानस्यदेवानांत्वादेवताभ्योगृह्णामि। 4। भूयिष्ठंध्रुवायां। यजमानोप्येतैरेवानुमंत्रयते। अध्वर्युः। अन्यत्रोत्करादाज्यानिसादयित्वापोद्धत्याज्यस्थालीं। आपोदेवीरग्रेपुवोअग्रेगुवोग्रइमंयज्ञंनयताग्रेयज्ञपतिंधत्तयुष्मानिंद्रोवृणीतवृत्रतूर्येयूयमिंद्रमवृणीध्वंवृत्रतूर्येप्रोक्षिताःस्थ। प्रोक्षणीरभिमंत्र्य। ब्रह्मन्प्रोक्षिष्यामि। ब्रह्माणमामंत्रयते। ब्रह्मा। प्रोक्षयज्ञंदेवतावर्धयैतानाकस्यपृष्ठेयजमानोअस्तु। सप्तर्षीणाꣳसुकृतांयत्रलोकस्तत्रेमंयज्ञंयजमानंचधेहि। ॐप्रोक्ष। अध्वर्युः। कृष्णोस्याखरेष्ठोग्नयेत्वास्वाहा। विषायेध्मंत्रिःप्रोक्षति। वेदिरसिबर्हिषेत्वास्वाहा। त्रिर्वेदिं। बर्हिरसिस्रुग्भ्यस्त्वास्वाहा। त्रिर्बर्हिः। त्रिष्वपिसकृन्मंत्रेण। अंतर्वेदिपुरोग्रंथिबर्हिरासाद्य। यजमानः। अशिश्रेमबर्हिरंतःपृथिव्याꣳसꣳरोहयन्तओषधीर्विवृक्णाः। यासांमूलमुदवधीःस्फ्येनशिवानस्ताःसुहवाभवंतु। बर्हिरासाद्यमानं। अध्वर्युः। दिवेत्वा। अग्राणिप्रोक्षति। अंतरिक्षायत्वा। मध्यानि। पृथिव्यैत्वा। मूलानि। यजमानः। सुमनसोयजमानायसंत्वोषधीरापइहशक्करीश्च। वृष्टिद्यावापर्जन्यएनाविरोहयतुहिरण्यवर्णाःशतवल्शाअदब्धाः। बर्हिःप्रोक्षमाणं। अध्वर्युः। स्रुच्यग्राण्युपपाय्यमूलान्युपपाययति। पोषायवः। सहस्रुचाप्रत्यंचंग्रंथिंप्रत्युक्षति। स्वधापितृभ्यऊर्ग्भवबर्हिषद्भ्यऊर्जापृथिवींगच्छत। प्रोक्षण्यवशेषंनिनयतिवेदिदक्षिणस्याःश्रोणेःसंततमोत्तरस्याः। यजमानः। पितृभ्योबर्हिषद्भ्यइदंनमम। अपउपस्पृश्य। अध्वर्युः। पूषातेग्रंथिंविष्यतु। बर्हिषोग्रंथिंविष्यति। विष्णोःस्तूपोसि। पुरस्तात्प्रस्तरंगृह्णाति। कर्षन्निवापयच्छति। यजमानेप्राणापानौदधामि। प्रस्तरेपवित्रेअपिसृजति। प्राणापानाभ्यांत्वासतनुंकरोमि। ब्रह्मणेप्रयच्छति। ब्रह्मायजमानाय। यजमानोधारयन्नास्ते। अध्वर्युः। तृणैर्वेदिमंतर्धायाक्षणयाशुल्बꣳस्तृणाति। देवबर्हिरूर्णाम्रदसंत्वास्तृणामिस्वासस्थंदेवेभ्यः। अग्रैर्मूलान्याच्छादयन्प्रत्यगपवर्गंत्रिधातुपंचधातुवाधातौधातौमंत्रमावर्तयति। यजमानः। ऊर्णाम्रदुप्रथमानꣳस्योनंदेवेभ्योजुष्टꣳसदनायबर्हिः। सुवर्गेलोकेयजमानꣳहिधेहिमांनाकस्यपृष्ठेपरमेव्यौमन्। बर्हिःस्तीर्यमाणं। धातौधातौमंत्रः। चतुःशिखंडायुवतिःसुपेशाघृतप्रतीकावयुनानिवस्ते।

सास्तीर्यमाणामहृतेसौभगायसामैधुक्ष्वयजमानायकामान्। मध्यममधातुनावेदिश्स्तीर्यमाणां।
शिवाचमेशग्माचैधिस्योनाचमेसुषदाचैध्यूर्जस्वतीचमेपयस्वतीचैधिसूपचरणाचमेस्वधिचरणाचैधीषमूर्जमेपिन्वस्वब्रह्मतेजोमेपि
न्वस्वक्षत्रमोजोमेपिन्वस्वविशंपुष्टिमेपिन्वस्वायुरन्नाद्यंमेपिन्वस्वप्रजांपशूनमेपिन्वस्व। स्तीर्णां। अध्वर्युः।
अनूयाजार्थेउल्मुकेउदूह्याहवनीयंकल्पयित्वाप्रत्यादायप्रस्तरंपरिधिन् परिदधाति।
गंधर्वोसिविश्वावसुर्विश्वस्मादीषतोयजमानस्यपरिधिरिडईडितः। बर्हिष्युदगग्रंमध्यमं। यजमानः।
अस्मिन्यज्ञउपभूयइन्नुमेविक्षोभायपरिधींदधामि। धर्ताधरुणोधरीयानग्निर्द्वेषाश्सिनिरितोनुदातै।
ध्रुवोसिध्रुवोहश्संजातेषुभूयासंधीरश्चेत्तावसुवित्। मध्यमं। अध्वर्युः। इंद्रस्यबाहुरसिदक्षिणोयजमानस्यपरिधिरिडईडितः।
दक्षिणार्ध्यंश्सश्स्पृष्टंमध्यमेनाभ्यग्रं। यजमानः। अस्मिन्यज्ञउपभूयइन्नुमेविक्षोभायपरिधींदधामि।
धर्ताधरुणोधरीयानग्निर्द्वेषाश्सिनिरितोनुदातै। उग्रोस्युग्रोहश्संजातेषुभूयासमुग्रश्चेत्तावसुवित्।
युनज्मित्वाब्रह्मणादैव्येनहव्यायास्मैवोढवेजातवेदः। इन्धानास्त्वासुप्रजसःसुवीराज्योग्जीवेमबलिहृतोवयंते।
यन्मेअग्नेअस्ययज्ञस्यरिष्याद्यद्वास्कंदादाज्यस्योतविष्णो। तेनहन्मिसपत्नंदुर्मरायुमैनंदधामिनिरृत्याउपस्थे। अध्वर्युः।
मित्रावरुणौत्वोत्तरतःपरिधत्तांध्रुवेणधर्मणायजमानस्यपरिधिरिडईडितः। उत्तरार्ध्यंश्सश्स्पृष्टंमध्यमेनाभ्यग्रं। यजमानः।
अस्मिन्यज्ञउपभूयइन्नुमेविक्षोभायपरिधींदधामि। धर्ताधरुणोधरीयानग्निर्द्वेषाश्सिनिरितोनुदातै।
अभिभूरस्यभिभूरहश्संजातेषुभूयासमभिभूश्चेत्तावसुवित्। अध्वर्युः। सूर्यस्त्वापुरस्तात्पातुकस्याश्चिदभिशस्त्याः।
आहवनीयमभिमंत्रयते। यजमानः। तेजिष्ठातेतपनायाचरोचनाप्रत्योषंतीस्तनुवोयास्ते।
अग्नेताभिर्वर्माण्यभितोव्ययस्वमात्वादभन्यातुधानाःपिशाचाः। परिधितं। अध्वर्युः। ऊर्ध्वेआघारसमिधावादधाति।
वीतिहोत्रंत्वाकवेद्युमन्तश्समिधीमह्यग्नेबृहन्तमध्वरे। दक्षिणां। तूष्णीमुत्तरां। समावनंतर्गर्भौदर्भौबर्हिषोविधृतीकुरुते।
विशोयंत्रेस्थः। वेदेर्मध्येबर्हिष्युदीचीनाग्रेनिदधाति। यजमानः।
विच्छिंनद्मिविधृतीभ्याश्सपत्नाञ्जातान्भ्रातृव्यान्येचजनिष्यमाणाः। विशोयंत्राभ्यांविधमाम्येनानहश्स्वानामुत्तमोसानिदेवाः।
विशोयंत्रेनुदमानेअरातिंविश्वंपाप्मानममतिंदुर्मरायुं।
सीदंतिदेवीसुकृतस्यलोकेधृतीस्थोविधृतीस्वधृतीप्राणान्मयिधारयतंप्रजांमयिधारयतंपशून्मयिधारयतं। विधृतीसाद्यमाने।
अध्वर्युः। वसूनाश्रुद्राणामादित्यानाश्सदसिसीद। तयोःप्रस्तरश्सादयति। यजमानः।
अयंप्रस्तरउभयस्यधर्ताधर्ताप्रयाजानामुतानूयाजानां। सदाधारसमिधोविश्वरूपास्तस्मिन्स्रुचोअध्यासादयामि। प्रस्तरं।

अध्वर्युः। जुहूरसिघृताचीनाम्नाप्रियेणनाम्नाप्रियेसदसिसीद। प्रस्तरेजुहूं। यजमानः।
आरोहपथोजुहुदेवयानान्यत्रर्षयःप्रथमजायेपुराणाः। हिरण्यपक्षाजिरासंभृतांगावहासिमासुकृतांयत्रलोकाः।
जुहूरसिघृताचीगायत्रियाग्नीकविभिर्जुषाणा। अव्यथमानायज्ञमनुयच्छस्वसुनीतीयज्ञंनयास्युपदेवानाग्नेयेनशर्मणादैव्येन। जुहूं।
अध्वर्युः। उपभृदसिघृताचीनाम्नाप्रियेणनाम्नाप्रियेसदसिसीद। उपभृतमधस्ताद्विधृत्योः। यजमानः।
अवाहंबाधउपभृतासपत्नान्जातान्भ्रातृव्यान्येचजनिष्यमाणाः। दोहैयज्ञंसुदुघामिवधेनुमहमुत्तरोभूयासमधरेमत्सपत्नाः।
सुभृदस्युपभृद्घृताचीत्रैष्टुभेनछन्दसाविश्वेवेदः। अव्यथमानायज्ञमनुयच्छस्वसुनीतीयज्ञंनयास्युपदेवानैंद्रेणशर्मणादैव्येन।
उपभृतं। अध्वर्युः। ध्रुवासिघृताचीनाम्नाप्रियेणनाम्नाप्रियेसदसिसीद। ध्रुवामुपरिष्टाद्विधृत्योः। यजमानः।
योमावाचामनसादुर्मरायुर्हृदारातीयादभिदासदग्ने। इदमस्यचित्तमधरंध्रुवायाअहमुत्तरोभूयासमधरेमत्सपत्नाः।
ध्रुवासिधरणीधनस्यपूर्णाजागतेनछंदसाविश्वेवेदः।
अव्यथमानायज्ञमनुयच्छस्वसुनीतीयज्ञंनयास्युपदेवान्वैश्वदेवेनशर्मणादैव्येन। ध्रुवां। अध्वर्युः।
ऋषभोसिशाक्वरोवषट्कारस्यत्वामात्रायाꣳसादयामि। दक्षिणेनजुहूꣳस्रुवंध्रुवांवोत्तरेण। यजमानः।
स्योनोमेसीदसुषदःपृथिव्यांप्रथयिप्रजयापशुभिःसुवर्गेलोकेदिविसीदपृथिव्यामंतरिक्षेहमुत्तरोभूयासमधरेमत्सपत्नाः।
अयꣳस्रुवोअभिजिहर्तिहोमान्शतक्षरꣳछंदसानुष्टभेन। सर्वायज्ञस्यसमनक्तुविष्ठाबार्हस्पत्येनशर्मणादैव्येन। अध्वर्युः।
यथावकाशस्थालीं। यजमानः। इयꣳस्थालीघृतस्यपूर्णाच्छिन्नपयाःशतधारउत्सः। मारुतेनशर्मणादैव्येन। आज्यस्थालीं।
अध्वर्युः। एतासदन्सुकृतस्यलोकेताविष्णोपाहिपाहियज्ञंपाहियज्ञपतिंपाहिमांयज्ञनियं। स्रुचोभिमंत्रयते।
विष्णूनिस्थवैष्णवानिधामानिप्राजापत्यानि। स्रुग्गतान्याज्यानि। सस्रुवामाज्यस्थालींवेदंपात्रींचादाय।
इदमहꣳसेनायाअभीत्वर्यैमुखमपोहामि। वेदेनदक्षिणस्मात्पुरोडाशादंगारानपोह्योत्तरास्मादपोहति।
सूर्यज्योतिर्विभाहिमहतइंद्रियाय। अभिमंत्रयते। स्योनंतेसदनंकरोमिघृतस्यधारयासुशेवंकल्पयामि।
पात्र्यांप्रतिपुरोडाशमुपस्तीर्य। आप्यायतांघृतयोनिरग्निर्हव्यानुमन्यतां। खमंक्ष्वत्वचमंक्ष्वसुरूपंत्वावसुविदं।
पशूनांतेजसाग्नयेजुष्टमभिघारयामि। आग्नेयमभिघारयति। तूष्णीमितरं। यस्तेआत्मापशुषुप्रविष्टोदेवानांविष्ठामनुयोवितस्थे।
आत्मन्वान्सोमघृतवान्हिभूत्वासुवर्विंदुयजमानायमह्यं। श्रृतं। आर्द्रःप्रथस्नुर्भुवनस्यगोपाः। श्रृतउत्स्नातिजनितामतीनां।
पुरोडाशमुद्वासयति। अभिंदन्नपर्यावर्तयन्वेदेनभस्मप्रमृज्य। तस्मिन्सीदामृतेप्रतितिष्ठव्रीहीणांमेधसुमनस्यमानः।
उपस्तीर्णेपात्र्यांनिदधाति। एवमुत्तरं। दृꣳहगाꣳहगोपामतिंमावोयज्ञपतीरिषत्। श्रृतमुद्वासयति।

इराभूतिःपृथिव्यैरसोमोत्क्रमीत्। एकैकशःकपालान्यभिघार्यसंख्यायोद्वासयति। देवस्त्वासवितामध्वानक्तु। पुरोडाशमनक्ति। उपरिष्टादभ्यज्यस्रुवेणहस्तेनाधस्तादुपानक्ति। प्रियेणनाम्नाप्रियश्सदआसीदतां। अपरेणस्रुचःपुरोडाशावासादयति। मध्येवेदेःसान्नाय्यकुंभ्यौसंधायव्यूहति। दक्षिणस्याश्श्रोण्याश्शृतमुत्तरस्यांदधि। यजमानः। यस्तेआत्मापशुषुप्रविष्टोदेवानांविष्ठामनुयोवितस्थे। आत्मन्वान्सौमघृतवान्हिभूत्वासुवर्विंदयजमानायमह्यं। सान्नायेआसाद्यमाने। यज्ञोसिसर्वतःश्रितःसर्वतोमांभूतंभविष्यच्छ्रयताश्शतंमैसंत्वाशिषःसहस्रंमेसंतुसूनृताइरावतीःपशुमतीः। आग्नेयमासन्नमभिमंत्रयते। हस्तेनालभ्यमंत्रवचनं। प्रजापतिरसिसर्वतःश्रितःसर्वतोमांभूतंभविष्यच्छ्रयताश्शतंमैसंत्वाशिषःसहस्रंमेसंतुसूनृताइरावतीःपशुमतीः। अग्नीषोमीयं। योनःकनीयइहकामयाताअस्मिन्यज्ञेयजमानायमह्यं। अपतमिंद्राग्नीभुवनान्नुदेतामहंप्रजांवीरवतींविदेय। ऐंद्राग्नं। योनःकनीयइहकामयाताअस्मिन्यज्ञेयजमानायमह्यं। अपतमिंद्रोवैमृधभुवनान्नुदेतामहंप्रजांवीरवतींविदेय। ऐंद्रंवैमृधं। इदमिंद्रियममृतंवीर्यमनेनेंद्रायपशवोचिकित्सन्। तेनदेवाअवतोपमामिहेषमूर्जंयशःसहओजःसनेयश्शृतंमयिश्रयतां। शृतं। यत्पृथिवीमचरत्तत्प्रविष्टंयेनासिंचद्बलमिंद्रेप्रजापतिः। इदंतच्छुक्रंमधुवाजिनीवद्येनोपरिष्टादधिनोन्महेंद्रं। दधिमांधिनोतु। दधि। अयंयज्ञःसमसदद्धविष्मानृचासाम्नायजुषादेवताभिः। तेनलोकान्सूर्यवतोजयेमेंद्रस्यसख्यममृतत्वमश्यां। सश्सन्नान्यभिमृशति। ममाग्नेवर्चोविहवेष्वस्तुवयंत्वेंधानास्तनुवंपुषेम। मह्यंनमंतांप्रदिशश्चतस्रस्त्वयाध्यक्षेणपृतनाजयेम। ममदेवाविहवेसंतुसर्वइंद्रावंतोमरुतोविष्णुरग्निः। ममांतरिक्षमुरुगोपमस्तुमह्यंवातःपवतांकामेअस्मिन्। मयिदेवाद्रविणमायजंतांमय्याशीरस्तुमयिदेवहूतिः। दैव्याहोतारावनिषंतपूर्वेरिष्टाःस्यामतनुवासुवीराः। मह्यंयजंतुममयानिहव्याकूतिःसत्यामनसोमेअस्तु। एनोमानिगांकतमच्चनाहंविश्वेदेवासोअधिवोचतामे। देवीःषडुर्वीरुरुणःकृणोतविश्वेदेवासइहवीरयध्वं। माहास्महिप्रजयामातनूभिर्मारधामद्विषतेसौमराजन्। अग्निर्मन्युंप्रतिनुदन्पुरस्ताददब्धोगोपाःपरिपाहिनस्त्वं। प्रत्यंचोयंतुनिगुतःपुनस्तेमैषांचित्तंप्रबुधाविनेषत्। धाताधातृणांभुवनस्ययस्पतिर्देवश्सवितारमभिमातिषाहं। इमंयज्ञमश्विनोभाबृहस्पतिर्देवाःपांतुयजमानंन्यर्थात्। उरुव्यचानोमहिषःशर्मयश्सदस्मिन्हवेपुरुहूतःपुरुक्षु। सनःप्रजायैहर्यश्वमृडयेंद्रमानोरीरिषोमापरादाः। पृथिवीहोता। द्यौरध्वर्युः। रुद्रोग्नीत्। बृहस्पतिरुपवक्ता। पौर्णमास्याश्हवीश्ष्यासन्नान्यभिमृशति। अग्निर्होता। अश्विनाध्वर्यू। त्वष्टाग्नीत्। मित्रउपवक्ता। पंचहोत्रैवामावास्यायां। अध्वर्युः। अयंवेदःपृथिवीमन्वविंदद्गुहासतींगहनेगह्वरेषु। सविंदतुयजमानायलोकमच्छिद्रंयज्ञंभूरिकर्माकरोतु। अग्रेणध्रुवांवेदंनिधाय। वेद्यंतान्परिस्तीर्यहोतृषदनंकल्पयति। कल्पयति।

। इति प्रथमः प्रश्नः ।

। अथ द्वितीय प्रश्नः ।

होतरेउहि। इध्मादेकाꣳसमिधमादाय। अग्नयेसमिध्यमानायानुब्रूउहि। संप्रेष्यति। यजमानः। दशहोतारंपुरस्तात्सामिधेनीनांव्याचक्षीत। चित्तिस्स्रुक्। चित्तमाज्यं। वाग्वेदिः। आधीतंबर्हिः। केतोअग्निः। विज्ञातमग्निः। वाक्पतिर्होता। मनउपवक्ता। प्राणोहविः। सामाध्वर्युः। अंगिरसोमास्ययज्ञस्यप्रातरनुवाकैरवंतु। अनूच्यमानासुसामिधेनीषुजपति। अध्वर्युः। आसीनःप्रणवेप्रणवेसमिधमादधाति। समिद्धोअग्नआहुतेत्यस्यामनूयाजसमिधमवशिष्यसर्वमिध्ममादधाति। यजमानः। समिद्धोअग्निराहुतःस्वाहाकृतःपिपर्तुनः। स्वगादेवेभ्यइदंनमः। उच्छुष्मोअग्नेयजमानायैधिनिशुष्मोअभिदासते। अग्नेदेवेद्धमन्विद्धमंद्रजिह्वामर्त्यस्यतेहोतर्मूर्धन्नाजिघर्मिरायस्पोषायसुप्रजास्त्वायसुवीर्याय। समिद्धमग्निं। देवाःपितरःपितरोदेवायोहमस्मिससन्यजेयस्यास्मिनतमंतरेमि। स्वंमइष्टꣳस्वंदत्तꣳस्वंपूर्तꣳस्वꣳश्रांतꣳस्वꣳहुतंतस्यमेग्निरुपद्रष्टावायुरुपश्रोतादित्योनुख्यातायौःपितापृथिवीमाताप्रजापतिर्बंधुर्यए वास्मिससन्यजेयस्यास्मिनतमंतरेमि। होतृप्रवरेजपति। अध्वर्युः। ओढासुदेवतासु। वेदेनाग्निंत्रिरुपवाजयति। स्रुवेणध्रुवायाआज्यमादायवेदेनोपयम्योत्तरंपरिधिसंधिमन्ववहृत्यस्रुवं। प्रजापतयेमनवेस्वाहा। मनसाध्यायन्। दक्षिणाप्रांचमृजुंदीर्घꣳसंततंज्योतिष्मत्याघारयति। सर्वाणीध्मकाष्ठानिसꣳस्पर्शयति। यजमानः। प्रजापतयेमनवइदंनमम। मनोसिप्राजापत्यंमनसामाभूतेनाविश। स्रुवाघारमनुमंत्रयते। अध्वर्युः। स्रुवेणाज्यस्थाल्याआज्यमादाय। आप्यायतांध्रुवाघृतेनयज्ञंयज्ञंप्रतिदेवयद्भ्यः। सूर्यायाऊधोदित्याउपस्थउरुधारापृथिवीयज्ञेअस्मिन्। ध्रुवामाप्याययतिसर्वत्रैवं। अग्नीत्परिधीꣳश्चाग्निंचत्रिस्त्रिःसंमृड्ढि। संप्रेष्यति। आग्नीध्रः। इध्मसंनहनानिस्फ्यउपसंगृह्यप्रदक्षिणमनुपरिक्रामन्परिधीन्संमार्ष्टि। मध्यममुदंचंप्रांचावितरौ।

मध्यमꣳसंमृज्यप्रदक्षिणमग्रेणाहवनीयंपरिक्रम्यदक्षिणꣳसंमृज्यापरेणाग्निमुदङ्ङतिक्रम्योत्तरꣳसंमृज्ययथेतंप्रत्येत्ययथास्थानमव स्थायाग्निꣳसंमृजेत्।

सर्वत्रप्राङ्मुखः।

अग्नेवाजजिद्वाजंत्वासरिष्यंतंवाजंजेष्यंतंवाजिनंवाजजितंवाजजित्यायैसंमार्ज्म्यग्निमन्नादमन्नाद्याय। त्रिरग्निं। अध्वर्युः। भुवनमसिविप्रथस्वाग्नेयष्टरिदंनमः। अग्रेणजुहूपभृतौदेवेभ्यः। प्रचिनमंजलिंकरोति। स्वधापितृभ्यः। दक्षिणा। अपउपस्पृश्य। जुह्वेह्यग्निस्त्वाह्वयतिदेवयज्यायै। जुहूमादत्ते। उपभृदेहिदेवस्त्वासविताह्वयतिदेवयज्यायै। उपभृतं। सुयमेमेद्यघृताचीभूयास्तꣳस्वावृतौसूपावृतौ। मुखतोभिहृत्योपभृतिजुहूमवदधातिहोष्यꣳस्तेनैवप्रत्यावहरति।

अग्नाविष्णूमावामवक्रमिषंविजिहाथांमामासंतासंलोकंमैलोककृतौकृणुतं। अनवक्लिष्यन्प्रस्तरंदक्षिणेनदक्षिणातिक्रम्य। विष्णोःस्थानमसीतइंद्रौअकृणोद्वीर्याणि। अवतिष्ठतेंतर्वैदिदक्षिणंपादमवघ्नन्सव्यंकृत्वादक्षिणंपरिधिसंधिमन्ववहृत्यस्रुचं। समारभ्योर्द्ध्वोअध्वरोदिविस्पृशमह्रुतोयज्ञोयज्ञपतेरिंद्रावान्स्वाहा। यजमानः। इंद्रायेदंनमम। वागस्यैंद्रीसपत्नक्षयणीवाचामेंद्रियेणाविश। स्रुच्यमाघारं। अध्वर्युः। हुत्वानुप्राणिति। बृहद्भाः। स्रुचमुद्गृह्णाति। पाहिमाग्नेदुश्चरितादामासुचरितेभज। असंस्पर्शयन्स्रुचावुदङ्व्येनात्याक्रामति। समक्तमग्निनाघृतंसमक्तंहविषाहविः। समंतरिक्षमर्चिषा। जुह्वाध्रुवांत्रिःसमनक्ति। उन्नीतंरायः। स्रुवेणध्रुवायाआज्यमादाय। सुवीरायस्वाहा। जुह्वंप्रत्यभिघारयति। यज्ञेनयज्ञःसंततः। जुह्वाध्रुवां। सादयित्वास्रुचौ। इध्मसन्नहनानिस्फ्यउपसंगृह्यवेदेश्चतृणमव्यंतमध्वर्युःप्रवरायावतिष्ठतेतान्याग्नीध्रोन्वारभ्यपश्चादवतिष्ठते। अध्वर्युः। कइदमध्वर्युर्भविष्यतिसइदमध्वर्युर्भविष्यतियज्ञोयज्ञस्यविष्णोःस्थानेतिष्ठामिवागार्त्विज्यंकरोतुमनआर्त्विज्यंकरोतुवाचंप्रपद्येभूर्भुवःसुवः। जपति। आग्नीध्रः। कइदमग्नीद्भविष्यतिसइदमग्नीद्भविष्यतियज्ञोयज्ञस्यविष्णोःस्थानेतिष्ठामिवागार्त्विज्यंकरोतुमनआर्त्विज्यंकरोतुवाचंप्रपद्येभूर्भुवःसुवः। जपति। अध्वर्युः। ब्रह्मन्प्रवरायाश्रावयिष्यामि?ब्रह्माणमामंत्रयते। ब्रह्मा। वाचस्पतेवाचमाश्रावयैतामाश्रावययज्ञंदेवेषुमांमनुष्येषुदेवतावर्धयैतानाकस्यपृष्ठेयजमानोअस्तु। सप्तर्षीणांसुकृतांयत्रलोकस्तत्रेमंयज्ञंयजमानंचधेहि। ओमाश्रावय। प्रसौति। आग्नीध्रः। अस्तुश्रौषट्। प्रत्याश्रावयति। अध्वर्युः। प्रवरंप्रवृणीते। अग्निर्देवोहोतादेवान्यक्षद्विद्वांश्चिकित्वन्मनुष्वद्भरतवदाभरद्वसुवदिन्द्रप्रमदावद्वसिष्ठवदिंद्रप्रमदावदाभरद्वसुवद्ब्रह्मण्वदाचवक्षद्ब्राह्मणाअस्ययज्ञस्यप्रावितारः। असावितिहोतुरुपांशुनामगृह्णाति। मानुषइत्युच्चैः। वेद्यांतृणमपिसृजति। यजमानः। देवाःपितरःपितरोदेवायौहमस्मिससन्यजेयस्यास्मिनतमंतरैमि। स्वंमइष्टंस्वंदत्तंस्वंपूर्तंस्वंश्रांतंस्वंहुतंतस्यमेग्निरुपद्रष्टावायुरुपश्रोतादित्यौनुख्यातायौःपितापृथिवीमाताप्रजापतिर्बंधुर्यएवास्मिससन्यजेयस्यास्मिनतमंतरैमि। मांदेवेष्वाश्रावयायुषेवर्चसे। अध्वर्युप्रवरे। चतुर्होतारंपुरस्तात्प्रयाजानांव्याचक्षीत। अध्वर्युः। घृतवतीमध्वर्योस्रुचमास्यस्वेत्युच्यमानेजुहूपभृतावादायदक्षिणासकृदतिक्रांतःपंचप्रयाजान्यजति। आश्राउवय। आग्नीध्रः। अस्तुश्रौउषट्। उत्करेदक्षिणामुखस्तिष्ठन्स्फ्यंधारयन्प्रत्याश्रावयति। अध्वर्युः। समिधोयज। प्रथमंप्रयाजंसंप्रेष्यति। वषट्कृतेपुरस्ताज्जुहोति। यजमानः। अग्नयइदं। वसंतमृतूनांप्रीणामिसमाप्रीतःप्रीणातु। अध्वर्युः।

आश्राव्यप्रत्याश्राविते। यज। संप्रेष्यति। वषट्कृतेदक्षिणतोजुहोति। यजमानः। अग्नयइदं। ग्रीष्ममृतूनांप्रीणामिसमाप्रीतःप्रीणातु। अध्वर्युः। आश्राव्यप्रत्याश्राविते। यज। संप्रेष्यति। इतिकेचित्। एकस्माआज्यमवशिष्यवषट्कृतेपश्चाज्जुहोति। यजमानः। अग्नयइदं। वर्षाऋतूनांप्रीणामितामाप्रीताःप्रीणंतु। अध्वर्युः। अर्धमौपभृतस्यजुह्वामानीय। आश्राव्यप्रत्याश्राविते। यज। संप्रेष्यति। वषट्कृतेबर्हिरुत्तरतोजुहोति। यजमानः। अग्नयइदं। शरदमृतूनांप्रीणामिसामाप्रीताप्रीणातु। अध्वर्युः। आश्राव्यप्रत्याश्राविते। यज। संप्रेष्यति। वषट्कृतेमध्येस्वाहाकारंजुहोति। यजमानः। अग्नयइदं। हेमंतशिशिरावृतूनांप्रीणामितौमाप्रीतौप्रीणीतां। अध्वर्युः। प्रत्याक्रम्यप्रयाजशेषेणहवींष्यभिघारयति। ध्रुवामभिघार्याग्निमभिघारयति। आनुपूर्व्येणहवींषि। उपभृतमंततः। सादयित्वास्रुचौ। आप्यायतांध्रुवाघृतेनयज्ञंयज्ञंप्रतिदेवयद्भ्यः। सूर्यायाऊधोदित्याउपस्थउरुधारापृथिवीयज्ञेअस्मिन्। जुह्वांचतुर्गृहीतंगृहीत्वाप्रस्तरंबर्हिरंक्त्वा। चतुर्थौंतेप्रस्तरबर्हिरंजनं। अग्नयेनुब्रू३हि। आश्राव्यप्रत्याश्राविते। अग्निंयज। संप्रेष्यति। वषट्कृतउत्तरार्धेजुहोति। यजमानः। अग्नयइदं। अग्निश्चक्षुष्मांस्तस्याहंदेवयज्ययाचक्षुष्मान्भूयासं। अध्वर्युः। प्रत्याक्रम्यपूर्ववच्चतुर्गृहीतंगृहीत्वा। सोमायानुब्रू३हि। आश्राव्यप्रत्याश्राविते। सोमंयज। संप्रेष्यति। वषट्कृतेदक्षिणार्धेजुहोति। सर्वाणिहवींषितावंतरेणयजति। यजमानः। सोमायेदं। सोमश्चक्षुष्मांस्तस्याहंदेवयज्ययाचक्षुष्मान्भूयासं। पंचहोतारंपुरस्ताद्धविषामवदानानांव्याचक्षीत। अध्वर्युः। स्रुच्युपस्तीर्य। माभेर्मासंविक्थामात्वाहिंसिषंमातेतेजोपक्रमीत्। भरतमुद्धरेमनुषिंचावदानानितेप्रत्यवदास्यामिनमस्तेअस्तुमामाहिंसीः।

हविरभिमृश्यमांससंहिताभ्यामंगुलीभ्यामंगुष्ठेनचमध्यात्पुरोडाशस्यावदायपूर्वार्धादवद्यति। पश्चार्धात्तृतीयंपंचावत्तिनः। आप्यायतांध्रुवाघृतेनयज्ञंयज्ञंप्रतिदेवयद्भ्यः। सूर्यायाऊधोदित्याउपस्थउरुधारापृथिवीयज्ञेअस्मिन्। अभिघार्य। यद्वदानानितेवद्यन्विलोमाकार्षमात्मनः। आज्येनप्रत्यनज्म्येनत्तत्तआप्यायतांपुनः। हविःप्रत्यभिघारयति। अग्नयेनुब्रू३हि। आश्राव्यप्रत्याश्राविते। अग्निंयज। संप्रेष्यति। वषट्कृतेजुहोति। अपदधदिवाप्रक्षणन्पुरोडाशाहुतिंजुहोत्याज्यंहुत्वावदानंजुहोत्यंततोन्ववस्रावयति। मुखेनेतराःस्रावयति। यजमानः। अग्नयइदं। अग्नेरहंदेवयज्ययान्नादोभूयासं। अध्वर्युः। प्रत्याक्रम्यपूर्ववच्चतुर्गृहीतंगृहीत्वा। प्रजापतये। उपांशूक्त्वा। अनुब्रू३हि। उच्चैः। आश्राव्यप्रत्याश्राविते। प्रजापतिं। उपांशूक्त्वा। यज। उच्चैः। वषट्कृतेजुहोति। यजमानः। प्रजापतयइदं। दब्धिरस्यदब्धोभूयासंपाप्मानंदभेयं। अध्वर्युः। स्रुच्युपस्तीर्य। माभेर्मासंविक्थामात्वाहिंसिषंमातेतेजोपक्रमीत्। भरतमुद्धरेमनुषिंचावदानानितेप्रत्यवदास्यामिनमस्तेअस्तुमामाहिंसीः।

हविरभिमृश्यमाꣳससꣳहिताभ्यामंगुलीभ्यामंगुष्ठेनचमध्यात्पुरोडाशस्यावदायपूर्वार्धादवद्यति। पश्चार्धात्तृतीयंपंचावत्तिनः। आप्यायतांध्रुवाघृतेनयज्ञंयज्ञंप्रतिदेवयद्भ्यः। सूर्यायाऊधोदित्याउपस्थउरुधारापृथिवीयज्ञेअस्मिन्। अभिघार्य। यद्ववदानानितेवद्यन्विलोमाकार्षमात्मनः। आज्येनप्रत्यनज्म्येनत्तत्आप्यायतांपुनः। हविःप्रत्यभिघारयति। अग्नीषोमाभ्यामनुब्रू३हि। आश्राव्यप्रत्याश्राविते। अग्नीषोमौयज। संप्रेष्यति। वषट्कृतेजुहोति। यजमानः। अग्नीषोमाभ्यामिदंनमम। अग्नीषोमयोरहंदेवयज्ययावृत्रहाभूयासं। इतिपौर्णमास्यां। अमावास्यायांतुआग्नेयेनप्रचर्य। ऐंद्राग्नेनप्रचरति। अग्नीषोमवत्। ऊहेविशेषः। इंद्राग्निभ्यामनुब्रू३हि। इंद्राग्नीयज। यजमानः। इंद्राग्निभ्यामिदन्नमम। इंद्राग्नियोरहंदेवयज्ययेंद्रियाव्यन्नादोभूयासं। इत्यसन्नयतः। सन्नयतःसान्नाय्याभ्यांप्रचरति। द्विःश्रृतस्यावद्यतिद्विर्दध्नः। अभिघार्य। यद्ववदानानितेवद्यन्विलोमाकार्षमात्मनः। आज्येनप्रत्यनज्म्येनत्तत्आप्यायतांपुनः। हविःप्रत्यभिघारयति। इंद्रायानू३ब्रूहि। महेंद्रायेतिवा। आश्राव्यप्रत्याश्राविते। इंद्रंयज। महेंद्रंवा। यजमानः। इंद्रायेदंनमम। इंद्रस्याहंदेवयज्ययेंद्रियावीभूयासं। महेंद्रायेदंनमम। महेंद्रस्याहंदेवयज्ययाजेमानंमहिमानंगमेयं। इत्यमावास्यायां। अध्वर्युः। स्रुच्युपस्तीर्य। सर्वेभ्यउत्तरार्धेभ्यःसकृत्सकृदवद्यति। द्विःपंचावत्तिनः। द्विरभिघारयति। नहविःप्रत्यभिघारयति। अग्नयेस्विष्टकृतेनुब्रू३हि। आश्राव्यप्रत्याश्राविते। अग्निꣳस्विष्टकृतंयज। संप्रेष्यति। वषट्कृतउत्तरार्धपूर्वार्धेअसꣳसक्तामितराहुतिभिर्जुहोति। यजमानः। अग्नयेस्विष्टकृतइदंनमम। अग्नेःस्विष्टकृतोहंदेवयज्ययायुष्मान्यज्ञेनप्रतिष्ठांगमेयं। अग्निर्मादुरिष्टात्पातुसविताघशꣳसाद्योमेन्तिदूरेरातीयतितमेतेनजेषं। अध्वर्युः। प्रत्याक्रम्यस्रुचमद्भिःपूरयित्वा। वैश्वानरेहविरिदंजुहोमिसाहस्रमुत्सꣳशतधारमेतं। तस्मिन्नेषपितरंपितामहंप्रपितामहꣳस्वर्गेलोकेबिभरत्पिन्वमाने। परिध्यभावेगृहमेधीयेपि। मध्यमंपरिधिंप्रदक्षिणमनुपरिषिंचति। यजमानः। पित्रेपितामहायप्रपितामहायेदंनमम। अध्वर्युः। सादयित्वास्रुचौ। प्राशित्रꣳस्थालीगतेनाज्येनोपस्तीर्यआग्नेयंप्राचंविरुज्यापउपस्पृश्य। अंगुष्ठेनोपमध्यमयाचांगुल्यादायाविरुज्योत्तरस्मात्तदुभयंयवमात्रं। पिप्पलमात्रेमंत्रोनलिंगविरोधात्। अज्यायोयवमात्रादाव्याधात्कृत्यतामिदं। मारूरुपामयज्ञस्यंशुद्धꣳस्विष्टमिदꣳहविः। अनुमृश्यप्राशित्रमवद्यति। ब्रह्मा। मित्रस्यत्वाचक्षुषाप्रेक्षे। प्राशित्रमवदीयमानंप्रेक्षते। अध्वर्युः। अभिघार्याग्रेणाहवनीयंब्रह्मयजमानावाहवनीयंचांतरेणनीत्वापरेणाहवनीयंनिदधाति। इडापात्रउपस्तीर्य। मनुनादृष्टांघृतपदींमित्रावरुणसमीरितां। दक्षिणार्धादसंभिंदन्नवद्याम्येकतोमुखां।

दक्षिणार्धात्पुरोडाशस्यपूर्वमवदानमवद्यतिपूर्वार्धादणुमिवदीर्घयजमानभागंतमाज्येनसंतर्प्यध्रुवायाउपोह्य। संभेदमवद्यतिसर्वेभ्योहविर्भ्यः। अभिघार्यप्राचींप्रोहति। अग्रेणहोतारंदक्षिणातिक्रम्यप्रदक्षिणमावृत्यपश्चात्प्राङासीनोहोतुरंगुलिपर्वणीअनक्ति। पूर्वमग्रेथापरं। प्रसव्यमावृत्ययथेतंप्रत्येत्यपुरस्तात्प्रत्यङ्ङासीनोहोत्रइडांप्रयच्छति। यजमानः। सुरूपवर्षवर्णएहीमान्भद्रान्दुर्याँ अभ्येहिमामनुव्रतान्युशीर्षाणिमृड्विमिडएह्यदितएहिसरस्वत्येहिरंतिरसिरमतिरसिसूनर्यसिजुष्टेजुष्टिंतेशीयोपहूतउपहवंतेशीय। इडामाह्रियमाणांप्रतीक्षते। अध्वर्युः। दक्षिणेहोतुःपाणाविडायाअवांतरेडामवद्यतिलेपादुपस्तृणातिसकृदवदधाति। होतास्वयंद्वितीयमादत्ते। अध्वर्युः। लेपेनाभिघारयति। उपहूयमानामध्वर्युराग्नीध्रोयजमानश्चान्वारभंते। यजमानः। इडएह्यदितएहिभूयस्येहिश्रेयस्येहिवसीयस्येहिचित्तएहिदधिषएहि। उपांशूपहवेसप्तदेवगवीर्जपति। चिदसिमनासिवस्वीरंतीरमतिःसुनरीसूनृता। उच्चैरुपहवेसप्तमनुष्यगवीर्जपति। विश्वात्वंभूतानुप्राणिहिविश्वात्वाभूतानुप्राणंतु। भूरस्यायुरसीष्टिरसि।

सुरूपवर्षवर्णएहीमान्भद्रान्दुर्याँ अभ्येहिमामनुव्रतान्युशीर्षाणिमृड्वंसानःप्रियासुप्रतूर्तिःप्रियानःसुहृन्नाःप्रियवतीमघोनीजुष्टएहिरंतएहिरमतएहिसूनृतएहिसुहवामएहिसहरायस्पोषेणदेवीर्दैवैरभिमानिवर्तध्वंस्योनास्योनेघृतेनमांसमुक्षतनमएतदुपदंभिषगृषिर्ब्रह्मायद्दौसमुद्रादुदचन्निव। स्रुचावागग्रेविप्रस्यतिष्ठतिशृंगेभिर्दशभिर्दिशन्। उच्चैरुपहवे। वायविडातेमाता। होतारमीक्षमाणोवायुंमनसाध्यायेत्। उपहूतोयमित्युच्यमाने। उपहूतःपशुमानसानि। जपति। अस्मास्विंद्रइंद्रियंदधात्वस्मात्रायउतयज्ञाःसंचंतामस्मासुसंत्वाशिषःसानःप्रियासुप्रतूर्तिर्मघोनीजुष्टिरसिजुषस्वनोजुष्टानोसिजुष्टिंतेगमेयं।

इडायाअहंदेवयज्ययापुष्टिमान्पशुमान्भूयासमिडैभागंजुषस्वनोजिन्वगाजिन्वार्वतस्तस्यास्तेभक्षिवाणःस्यामसर्वात्मानःसर्वगणाः। इडाधेनुःसहवत्सानआगादूर्जंदुहानापयसाप्रपीना। सानोअन्नेनहविषोतगोभिरिडाजिन्वतांपयसाभ्यमस्मान्। उपहूतामिडां। अध्वर्युः। दैव्याअध्वर्यवइत्युच्यमाने। उपहूतःपशुमानसानि। जपति। उपहूतायामग्रेणाहवनीयंपरीत्यब्रह्मणेप्राशित्रंपरिहरति। ब्रह्मा। ऋतस्यपथापर्येहि। पर्याह्रियमाणं। सूर्यस्यत्वाचक्षुषाप्रतिपश्यामि। आह्रियमाणं। देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांप्रतिगृह्णामि। प्रतिगृह्य। पृथिव्यास्त्वानाभौसादयामीडायाःपदे। अपरेणाहवनीयंव्यूह्यतृणानिप्राग्दंडंसादयति। सुपर्णस्यत्वागरुत्मतश्चक्षुषावपश्यामि।

अवेक्ष्य। देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामाददे। अंगुष्ठेनोपमध्यमयाचांगुल्यादाय। अग्नेस्त्वास्येनप्राश्नामि। प्राश्नाति। ब्राह्मणस्योदरेण। असंश्लेत्थावगिरति। नदतोगमयति। याअप्स्वंतर्देवतास्ताइदꣳशमयंतुस्वाहाकृतंजठरमिंद्रस्यगच्छ। अद्भिरभ्यवहरति। आचम्य। घसिनामेमासंपृक्थाऊर्ध्वमेनाभेःसीदेंद्रस्यत्वाजठरेसादयामि। नाभिदेशमभिमृशति। वाङ्मआसन्। नसोःप्राणः। अक्ष्योश्चक्षुः। कर्णयोःश्रोत्रं। बाहुवोर्बलं। ऊरुवोरोजः। यथारूपंप्राणायतनानिसंमृशति। अरिष्टाविश्वान्यंगानितनूस्तनुवामेसहनमस्तेअस्तुमामाहिꣳसीः। सर्वाण्यंगानि। पात्रंप्रक्षाल्यपूरयित्वा। दिशोजिन्व। परांचंनिनयति। अपरंपूरयित्वा। मांजिन्व। अभ्यात्मंनिनयति। इडासिस्योनासिस्योनकृत्सानोरायस्पोषेसुप्रजास्त्वेधाः। मखस्यत्वाद्युम्नायसुरभ्यास्यत्वायत्वाप्राश्नामि। उपहूतामृत्विजःप्राश्नंति। यजमानपंचमाः। वाग्यताभवंत्यामार्जनात्। मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञꣳसमिमंदधातु। बृहस्पतिस्तनुतामिमंनोविश्वेदेवाइहमादयंतां। अंतर्वेदिपवित्रवतिप्रस्तरदेशेमार्जयंते। अध्वर्युः। आग्नेयंचतुर्धाविरुज्यबर्हिषदंकरोति। यजमानः। ब्रध्नपिन्वस्वददतोमेमाक्षायिकुर्वतोमेमोपदसद्दिशांक्लृप्तिरसिदिशोमेकल्पंतांकल्पंतांमेदिशोदैवीश्चमानुषीश्चाहोरात्रेमेकल्पेतामर्धमासामेकल्पंतांमासामेकल्पंतामृतवोमेकल्पंताꣳसंवत्सरोमेकल्पतांक्लृप्तिरसिकल्पतांमे। आशानांत्वाशापालेभ्यश्चतुर्भ्योअमृतेभ्यः। इदंभूतस्याध्यक्षेभ्योविधेमहविषावयं। भजतांभागीभागंमाभागोभक्तनिरभागंभजामोपस्पिन्वोषधीर्जिन्वद्विपात्पाहिचतुष्पादवदिवोवृष्टिमेरय। ब्राह्मणानामिदꣳहविःसोम्यानाꣳसोमपीथिनांनिर्भक्तोब्राह्मणोनेहाब्राह्मणस्यास्ति। प्रतिदिशंव्यूहति। इदंब्रह्मणः। इदꣳहोतुः। इदमध्वर्योः। इदमग्नीधः। चतुर्धाव्यादिशति। अध्वर्युः। इदंयजमानस्य। यजमानभागमादिशति। अग्नीधेषडवत्तꣳसंपादयति। उपस्तीर्यावदायाभिघारयत्येवंपुनरवद्यति। अग्रेणाहवनीयंवेदेनब्रह्मयजमानभागौपरिहरत्यन्येनपात्रेणहोत्रेन्येनाध्वर्यवे। आग्नीध्रः। दिवोभागोस्यग्नेराग्नीध्रमस्यग्नेःशामित्रमस्यग्नेस्त्वास्येनप्राश्नामिनमस्तेअस्तुमामाहिꣳसीः। प्राश्नाति। अध्वर्युः। अंतरिक्षस्यभागोसि। प्राश्नाति। अन्वाहार्यमभिघार्यांतर्वेद्यामासादयति। ब्रह्मा। ब्रह्मन्ब्रह्मासिब्रह्मणेत्वाहुताद्यमामाहिꣳसीरहुतोमह्यꣳशिवोभव। प्रजापतेर्भागोस्यूर्जस्वान्पयस्वान्प्राणापानौमेपाहिसमानव्यानौमेपाह्युदानव्यानौमेपाह्यक्षितोस्यक्षित्यैत्वामामेक्षेष्ठाअमुत्रामुष्मिंल्लोके। अन्वाहार्यमासन्नमभिमृशति। यजमानः। इयꣳस्थाल्यमृतस्यपूर्णासहस्रधारउत्सोअक्षीयमाणः। सदाधारपृथिवीमंतरिक्षंदिवंचतेनौदनेनातितराणिमृत्युं।

प्रजापतेर्भागोस्यूर्जस्वान्पयस्वान्प्राणापानौमेपाहिसमानव्यानौमेपाह्युदानव्यानौमेपाह्यक्षितोस्यक्षित्यैत्वामामेक्षेष्ठाअमुत्रामुष्मिंल्लोके। अंतर्वेद्यन्वाहार्यमासन्नमभिमृशति। अध्वर्युः। दक्षिणसद्म्यउपहर्तवै। संप्रेष्यति। यजमानः। दक्षिणतएतब्राह्मणाअयंवओदनोयथाभागंप्रतिगृह्णीध्वं। संप्रेष्यति। दक्षिणांप्रतिग्रहीष्यन्सप्तदशकृत्वोपान्यात्। व्यावृत्यप्रतिग्रहणं।

देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांप्रतिगृह्णामिराजात्वावरुणोनयतुदेविदक्षिणेब्रह्मणओदनंतेनामृतत्वमश्यांवयोदात्रेभूयान्मयोमह्यमस्तुप्रतिग्रहीत्रेकइदंकस्माअदात्कामःकामायकामोदाताकामःप्रतिग्रहीताकामंसमुद्रमाविशकामेनत्वाप्रतिगृह्णामिकामैतत्तएषातेकामदक्षिणोत्तानस्त्वांगीरसःप्रतिगृह्णातु। अन्वाहार्यंचतुर्धाकरणक्रमेणप्रतिगृह्यप्रत्यायंति। ब्रह्मापिस्वमार्गेणगत्वाप्रतिगृह्यागत्योपविशेत्। अध्वर्युः। हविःशेषानुद्वास्य। अनुद्वासनेततंमआपइत्याहुः। अनूयाजार्थेउल्मुकेअपिसृज्य। ब्रह्मन्प्रस्थास्यामःसमिधमाधायाग्नीत्परिधींश्चाग्निंचसकृत्सकृत्संमृड्ढि। संप्रेष्यति। ब्रह्मा। देवसवितरेतत्तेप्राहतत्प्रचसुवप्रचयजबृहस्पतिर्ब्रह्मासयज्ञंपाहिसयज्ञपतिंपाहिसमांपाहिओं3प्रतिष्ठ। आग्नीध्रः। एषातेअग्नेसमित्तयावर्धस्वचाचप्यायस्ववर्धतांचतेयज्ञपतिराचप्यायतांस्वाहा। समिधमादधाति। यजमानः। अग्नयइदंनमम। एषातेअग्नेसमित्तयावर्धस्वचाचप्यायस्ववर्धिषीमहिचवयमाचप्यासिषीमहि। यंतेअग्नआवृश्च्याम्यहंवाक्षिपितश्चरंन्। प्रजांचतस्यमूलंचनीचैर्देवानिवृश्चत। अग्नेयोनोभिदासतिसमानोयश्चनिष्ट्यः। इध्मस्येवप्रक्षायतोमातस्योच्छेषिकिंचन। योमांद्वेष्टिजातवेदोयंचाहंद्वेष्मियश्चमां। सर्वांस्तानग्नेसंदहयांश्चाहंद्वेष्मियेचमां। अनूयाजसमिधमाधीयमानां। आग्नीध्रः। अस्यैरिध्मसंनहनैरपरिक्रामन्परिधीन्संमार्ष्टि। मध्यममुदंचंप्राचावितरौ। अग्नेवाजजिद्वाजंत्वाससृवांसंवाजंजिगिवांसंवाजिनंवाजजितंवाजजित्यायैसंमार्ज्म्यग्निमन्नादमन्नाद्याय। सकृदग्निं। योभूतानामधिपतीरुद्रस्तंतिचरोवृषा। पशूनस्माकंमाहिंसीरेतदस्तुहुतंतवस्वाहा। संमार्गानभ्युक्ष्याहवनीयेप्रहरति। यजमानः। भूतानामधिपतयेरुद्रायतंतिचरायेदंनमम। वेदिर्बर्हिःशृतंहविरिध्मःपरिधयःस्रुचः। आज्यंयज्ञऋचोयजुर्याज्याश्चवषट्काराःसंमेसन्नंतयोनमंतामिध्मसंनहनेहुते। इध्मसंनहनेहुतेजपति। महाहविर्होता। सत्यहविरध्वर्युः। अच्युतपाजाअग्नीत्। अच्युतमनाउपवक्ता। अनाधृष्यश्चाप्रतिधृष्यश्चयज्ञस्याभिगरौ। अयास्यउद्गाता। सप्तहोतारंपुरस्तादनूयाजानांव्याचक्षीत। अध्वर्युः। यदुपभृत्याज्यंतज्जुह्वामानीयतेनसकृदतिक्रांतस्त्रीननूयाजान्यजति। आश्राव्यप्रत्याश्राविते। देवान्यज। प्रथमंसंप्रेष्यति। वषट्कृतेग्रेणाघारसंभेदंपश्चात्पश्चात्समिधिजुहोति। पश्चादेवारभ्यप्राचमुत्तमंसंततंतेनेतरावनुसंभिनत्ति। यजमानः। अग्नयइदं। बर्हिषोहंदेवयज्ययाप्रजावान्भूयासं। अध्वर्युः।

आश्राव्यप्रत्याश्राविते। यज। संप्रेष्यति। वषङ्कृतेजुहोति। यजमानः। अग्नयइदंनमम। नराशꣳसस्याहंदेवयज्ययापशुमान्भूयासं। अध्वर्युः। आश्राव्यप्रत्याश्राविते। यज। संप्रेष्यति। यजमानः। अग्नयइदं। अग्नेःस्विष्टकृतोहंदेवयज्ययायुष्मान्यज्ञेनप्रतिष्ठांगमेयं। अंगिरसोमास्ययज्ञस्यप्रातरनुवाकैरहौषुः। अनूयाजेषुजपति। अध्वर्युः। प्रत्याक्रम्ययथायतनꣳस्रुचौसादयित्वावाजवतीभ्यांव्यूहत्युभौवाजवत्यौजपतः। वाजस्यमाप्रसवेनोद्ग्राभेणोदग्रभीत्। दक्षिणेनोत्तानेनसप्रस्तरांजुहूमुद्गृह्णाति। अथासपत्नाꣳइंद्रोमेनिग्राभेणाधराꣳअकः। नीचासव्येनोपभृतंनिगृह्णाति। उद्ग्राभंच। केवलांजुहूमुद्गृह्णाति। निग्राभंच। उपभृतंनिगृह्णाति। ब्रह्मदेवाअवीवृधन्। दक्षिणोत्तानेनप्राचींजुहूंप्रोहति। अथासपत्नानिंद्राग्नीमेविषूचीनान्व्यस्यतां। सव्येनोपभृतंप्रतीचींबहिर्वेदिनिरस्यति। अपउपस्पृश्य। अभ्युक्षोपभृतमाहृत्यजुह्वापरिधीननक्ति। वसुभ्यस्त्वा। मध्यमं। यजमानः। वसुभ्यइदंनमम। वसून्देवायज्ञेनापिप्रेयं। अध्वर्युः। रुद्रेभ्यस्त्वा। दक्षिणार्ध्यं। यजमानः। रुद्रेभ्यइदंनमम। रुद्रान्देवान्यज्ञेनापिप्रेयं। अध्वर्युः। आदित्येभ्यस्त्वा। उत्तरार्ध्यं। यजमानः। आदित्येभ्यइदंनमम। आदित्यान्देवान्यज्ञेनापिप्रेयं। परिधीनज्यमानान्। अध्वर्युः। अन्यत्रप्रस्तरात्जुहूꣳसादयित्वा। संजानाथांद्यावापृथिवीमित्रावरुणौत्वावृष्ट्यावतां। विधृतीभ्यांप्रस्तरꣳसमुल्लिप्यतूष्णींबर्हिषिविधृतीअपिसृज्य। स्रुक्षुप्रस्तरमनक्ति। अक्तꣳरिहाणाः। जुह्वामग्राणि। वियंतुवयः। उपभृतिमध्यानि। प्रजांयोनिंमानिर्मृक्षं। ध्रुवायांमूलानि। एवंपुनरनक्ति। तृतीयेतु। प्रजांयोनिंमानिर्मृक्षं। ध्रुवायांमूलानि। वियंतुवयः। उपभृतिमध्यानि। अक्तꣳरिहाणाः। जुह्वामग्राणि। यजमानः। समङ्क्तांबर्हिर्हविषाघृतेनसमादित्यैर्वसुभिःसंमरुद्भिः। समिंद्रेणविश्वेभिर्देवेभिरङ्क्तांदिव्यंनभोगच्छंतुयत्स्वाहा। प्रस्तरमज्यमानं। अध्वर्युः। आयुषेत्वा। अक्तस्यतृणमपादायप्रज्ञातंनिधाय। यजमानः। अपिप्रेड्यज्ञोयज्ञमयाट्देवाꣳअरंकृतःसोमः। तंमित्रोवरुणोअर्यमारायस्पोषायजमानंविशंतु। प्रस्तरस्यतृणमपात्तं। अध्वर्युः। प्रस्तरꣳशाखांचादायोत्तरपरिधिसंधिमन्ववहृत्याश्राव्यप्रत्याश्राविते। इषितादैव्याहोतारोभद्रवाच्यायप्रेषितोमानुषःसूक्तवाकायसूक्ताब्रूउहि। संप्रेष्यति। आप्यायंतामापओषधयोमरुतांपृषतयःस्थदिवंगच्छततोनोवृष्टिमेरयस्वाहा। प्रस्तरꣳशाखांचानुप्रहरति। अजिह्ममिवहस्तंधारयन्कर्षंनिवन्यंचमंततःपर्यावर्तयति। यजमानः। अग्नयइदंनमम। अग्नेरहमुज्जितिमनूज्जेषं। सोमायेदंनमम। सोमस्याहमुज्जितिमनूज्जेषं। अग्नयइदंनमम। अग्नेरहमुज्जितिमनूज्जेषं। प्रजापतयइदंनमम। प्रजापतेरहमुज्जितिमनूज्जेषं। अग्नीषोमाभ्यामिदंनमम। अग्नीषोमयोरहमुज्जितिमनूज्जेषं। इंद्रायवैमृधायेदंनमम।

इंद्रस्यवैमृधस्याहमुज्जितिमनूज्जेषं। {इंद्रायवेदंनमम। इद्रस्याहमुजितिमनुजेषं[। महेंद्रायेदंनमम। महेंद्रस्याहमुजितिमनुजेषं]सन्नयतस्तु}अमावास्यायाम्। ग्निभ्यामिदंनमम। इंद्राग्नियोरहमुज्जितिमनूज्जेषं। देवेभ्यआज्यपेभ्यइदंनमम। देवानामाज्यपानामहमुज्जितिमनूज्जेषं। अग्नयेस्विष्टकृतइदंनमम। अग्नेःस्विष्टकृतोहमुज्जितिमनूज्जेषं। अध्वर्युः। आशास्तेयंयजमानोसावित्युच्यमाने। अग्नीद्गमय। संप्रेष्यति। आग्नीध्रस्त्रिरंजलिनाप्रस्तरमूर्ध्वमुद्यौति। यजमानः। यर्हिहोतायजमानस्यनामगृह्णीयात्तर्हिब्रूयात्। एमाअग्मन्नाशिषोदोहकामाइंद्रवंतोवनामहेधुक्षीमहिप्रजामिषं। सामैसत्याशीर्देवेषुभूयान्मन्यान्मन्यतमाजुष्टाज्जुष्टतमादरैडतामनंसातच्छकेयंयज्ञोदिवꣳरोहतुयज्ञोदिवंगच्छतुयोदेवयानःपंथा स्तेनयज्ञोदेवाꣳअप्येतु। आशीष्षुजपति। यज्ञोमआगम्यात्। यत्कामयतेतस्यनामगृह्णाति। रोहितेनत्वाग्निर्देवतांगमयतु। हरिभ्यांत्वेंद्रोदेवतांगमयतु। एतशेनत्वासूर्योदेवतांगमयतु। प्रस्तरमवसृष्टं। अध्वर्युः। अनुप्रहर। संप्रेष्यति। आग्नीध्रः। स्वगातनुभ्यःस्वाहा। प्रस्तरस्यतृणमपात्तमनुप्रहरति। यजमानः। तनुभ्यइदंनमम। दिवःखीलोवततः। पृथिव्याअध्युत्थितः। तेनासहस्रकांडेनद्विषंतंतापयामसिद्विषन्नस्ताप्यतांबहुमानागास्ताप्यौषधयः। प्रस्तरस्यतृणमनुप्रहृतं। अध्वर्युः। एतत्एतत्एतदितित्रिरंगुल्यान्ववदिशति। आयुष्पाअग्नेस्यायुर्मेपाहिचक्षुष्पाअग्नेसिचक्षुर्मेपाहि। यथारूपंप्राणायतनानिसंमृशति। ध्रुवासि। अंतरवेदिपृथिवीमभिमृशति। आग्नीध्रः। संवदस्व। अध्वर्युः। अगानग्नीत्। आग्नीध्रः। अगन्। अध्वर्युः। श्राउवय। आग्नीध्रः। श्रौउषट्। अध्वर्युर्मध्यमंपरिधिमन्वारभ्य। स्वगादैव्याहोतृभ्यःस्वस्तिर्मानुषेभ्यःशंयोर्ब्रूꣳहि। संप्रेष्यति। यजमानः। विष्णोःशंयोरहंदेवयज्ययायज्ञेनप्रतिष्ठांगमेयं। शंयुवाकं। अध्वर्युः। यंपरिधिंपर्यधत्थाअग्नेदेवपणिभिर्वीयमाणः। तंतएतमनुजोषंभरामिनेदेषत्वदपचेतयातै। स्वाहेतिवृत्तिः। मध्यमंपरिधिमनुप्रहरति। यज्ञस्यपाथउपसमितं। स्वाहेतिवृत्तिः। इतरौ। अवांचमुत्तरस्याग्रमंगारेषूपोहति। यजमानः। वितिंमुंचामिरशनाविरश्मीन्वियोक्त्रायानिपरिचर्तनानिधत्तादुस्मासुद्रविणंयच्चभद्रंप्रणोब्रूताद्भागधान्देवतासु। अग्निंपरिधिषुप्रह्रियमाणेषु। अध्वर्युः। यजमानंप्रथत। परिधीननुमंत्रयते। उत्तानाभ्याꣳहस्ताभ्यामितिवृत्तिः। जुह्वाबिलउपभृतोग्रमवधाय।

सꣳस्रावभागास्थेषाबृहंतःप्रस्तरेष्ठाबर्हिषदश्चदेवाइमांवाचमभिविश्वेगृणंतआसद्यास्मिन्बर्हिषिमादयध्वꣳस्वाहा। स्रुचौप्रस्रावयति। यजमानः। वसुभ्योरुद्रेभ्यआदित्येभ्यःसꣳस्रावभागेभ्यइदंनमम। इष्टोयज्ञोभृगुभिर्द्रविणोदायतिभिराशीर्दावसुभिराशीर्वाꣳअथर्वभिः।

तस्यमेष्टस्यवीतस्यद्रविणमागम्याद्वसुर्यज्ञोवसुमान्यज्ञस्तस्यमायज्ञस्यवसोर्वसुमतौवस्विहागच्छतुयज्ञोमआगच्छतु।

सꣳस्रावभागाननुमंत्रयते। यत्कामयतेतस्यनामगृह्णाति। वेदो॑सिवित्ति॑रसिपाप्मनो॒व्यावृ॑त्यैवि॒देय॒कर्मा॑सिक॒रुण॑मसिक्रि॒यास॑ꣳसनि॒र॑सिसनि॒ता॑सि॑स॒नेयं॑घृ॒तव॑न्तंकुला॒यिन॑ꣳरा॒यस्पोष॑ꣳसह॒स्रिण॑ꣳवे॒दोद॑दातुवा॒जिन॑म्। वेदमंतर्वेद्यासन्नमभिमृशति। ऋत्विजोहविःशेषान्प्राश्नंत्याज्यलेपान्प्रक्षाल्य। जुहूपभृतावध्वर्युरादत्ते। वेदꣳहोता। सस्रुवामाज्यस्थालीमाग्नीध्रः। प्रत्यंचोयंति। पत्नीःसंयाजयिष्यंतोदक्षिणेनगार्हपत्यमध्वर्युरतिक्रामत्युत्तरेणेतरौ। अध्वर्युः। अ॒ग्नेर्वा॒मप॑न्नगृहस्य॒सद॑सिसादयामिसुम्ना॒य॑सुम्निनीसु॒म्ने॒मा॑धत्तंधु॒रिधु॒र्यौ॑पातं। स्फ्येस्रुचौसादयति। अपरेणगार्हपत्यमुपविश्यध्वानेनैवस्रुग्भ्यांपत्नीःसंयाजयंति। वेदंचोपभृत्यपत्न्यामन्वारब्धायांजुह्वांचतुर्गृहीतंगृहीत्वा। सोमायानुब्रू3हि। आश्राव्यप्रत्याश्राविते। सोमंयज। संप्रेष्यति। वषट्कृतउत्तरार्धेसोमंयजति। यजमानः। सोमायेदंनमम। सोम॑स्या॒हंदे॑वय॒ज्यया॑सुरे॒ता॒रेतो॑धिषीय। अध्वर्युः। त्वष्ट्रेनुब्रू3हि। आश्राव्यप्रत्याश्राविते। त्वष्टारंयज। वषट्कृतेदक्षिणार्धेत्वष्टारंयजति। तावंतरेणेतरायजति। यजमानः। त्वष्ट्रइदंनमम। त्वष्टु॒र॒हंदे॑वय॒ज्यया॑पशू॒ना॑ꣳरू॒पंपु॑षेयं। अध्वर्युः। देवानांपत्नीभ्योनुब्रू3हि। परिश्रिते। देवानांपत्नीर्यज। यजमानः। देवानांपत्नीभ्यइदंनमम। देवानांपत्नीनामहंदेवयज्ययाप्रजनिषीयप्रजयाचपशुभिश्च। अध्वर्युः। राकायानुब्रू3हि। राकांयज। यजमानः। राकायाइदंनमम। राकायाअहंदेवयज्ययाप्रजावान्भूयासं। अध्वर्युः। सिनीवाल्याअनुब्रू3हि। सिनीवालींयज। यजमानः। सिनीवाल्याइदंनमम। सिनीवाल्याअहंदेवयज्ययापशुमान्भूयासं। अध्वर्युः। कुह्वाअनुब्रू3हि। कुहूंयज। यजमानः। कुह्वाइदंनमम। कुह्वाअहंदेवयज्ययापुष्टिमान्भूयासं। अध्वर्युः। अग्नयेगृहपतयेनुब्रू3हि। अग्निंगृहपतिंयज। यजमानः। अग्नयेगृहपतयइदंनमम। अग्निर्गृहपतिर्यज्ञस्यप्रतिष्ठातस्याहंदेवयज्ययाप्रतिष्ठावान्भूयासं।

दे॒वाना॒ंपत्नी॒र॒ग्निर्गृ॒ह॒पति॒र्य॒ज्ञस्य॑मिथु॒नंतयो॒र॒हंदे॑वय॒ज्यया॑मिथु॒नेन॒प्रभू॑यासं। इतिसमस्तानुमंत्रणमेकेसमामनन्ति। अध्वर्युः। संपत्नी॒पत्या॑सुकृ॒तेन॒गच्छतां॒य॒ज्ञस्य॑युक्तौधु॒र्या॒वभूतां। सं॒जा॒ना॒नौवि॒जह॑ता॒मरा॑तीर्दि॒विज्योति॑र॒जर॒मार॑भेता॒ꣳस्वाहा॑। स्रुवेणगार्हपत्येसंपत्नीयंजुहोति। पत्न्यामन्वारब्धायां। यजमानः। दिविज्योतिषेपरमात्मनइदंनमम। अध्वर्युः। पूर्ववद्धोतुरंगुलीपर्वणीअनक्ति। दक्षिणोहोतुःपाणौचतुरआज्यबिंदूनिडामवद्यति। षडग्नीधः। उपहूयमानामध्वर्युराग्नीध्रःपत्नीचान्वारभन्ते। दैव्याअध्वर्यवइत्युच्यमाने। उपहूतःपशुमानसानि। जपति। यजमानः। इडास्माननुवस्तांघृतेनयस्याःपदेपुनतेदेवयंतः। वैश्वानरीशक्करीवावृधानोपयज्ञमस्थितवैश्वदेवी। आज्येडामनुमंत्रयते। पत्नी। उपहूतेयंयजमानाइत्युच्यमाने। उपहूतापशुमत्यसानि। जपति। आग्नीध्रः। उप॑हूतो॒द्यौःपि॒तोप॒मांद्यौःपि॒ताह्व॑यताम॒ग्निराग्नी॑ध्रा॒दायु॑षे॒वर्च॑से॒जी॒वात्वै॒पुण्या॑य। आज्येडांप्राश्नाति। प्राश्यतूष्णींमार्जयते।

अध्वर्युः। दक्षिणाग्नाविध्मप्रवृश्चनान्यभ्याधायपिष्टलेपफलीकरणहोमौजुहोति। चतुर्गृहीताज्येफलीकरणानोप्य। अग्नेदब्धायोशीततनोपाहिमाद्यदिवःपाहिप्रसित्यैपाहिदुरिष्ट्यैपाहिदुरद्मन्यैपाहिदुश्चरितादविषंनःपितुंकृणुसुषदायोनिꣳस्वाहा। यजमानः। अयासरस्वतीयशोभगीनातस्यैतेस्वाहा। फलीकरणेहूयमानेमुखंविमृष्टे। अग्नयेदब्धायवेशीततनवइदंनमम। यासरस्वतीवेशभगीनातस्यैतेस्वाहा। हुतेमुखंविमृष्टे। अध्वर्युः। अपरंचतुर्गृहीतंगृहीत्वा। पिष्टलेपमोप्य। उलूखलेमुसलेयच्चशूर्पआशिश्लेषदृषदियत्कपाले। अवप्रुषोविप्रुषःसंयजामिविश्वेदेवाहविरिदंजुषंतां। यज्ञेयाविप्रुषःसंतिबह्वीरग्नौताःसर्वाःस्विष्टाःसुहुताजुहोमिस्वाहा। चरौनभवति। पिष्टलेपंजुहोति। यजमानः। विश्वेभ्योदेवेभ्यइदंनमम। वेदोसिवित्तिरसिविदेयकर्मासिकरुणमसिक्रियासꣳसनिरसिसनितासिसनेयं। वेदꣳहोत्रापत्न्यैप्रदीयमानं। घृतवंतंकुलायिनꣳरायस्पोषꣳसहस्रिणंवेदोददातुवाजिनं। उपस्थेस्यमानं। निर्द्विषंतंनिररातिंनुद। वेदंपत्नीनिरस्यते। अध्वर्युः। सयोक्त्रेंजलौपूर्णपात्रमानयति। समायुषासंप्रजयासमग्नेवर्चसापुनः। संपत्नीपत्याहंगच्छेसमात्मातनुवामम। पत्न्यानीयमानेजपति। तत्सानिनीयमुखंविमृज्ययथार्थंगच्छति। यजमानः। त्वयावेदिंविविदुःपृथिवींत्वयायज्ञोजायतेविश्वदानिः। अच्छिद्रंयज्ञमन्वेषिविद्वान्त्वयाहोतासंतनोत्यर्धमासान्। वेदꣳस्तीर्यमाणं। यथेतमध्वर्युरेत्य। आप्यायतांद्विः। अयासरस्वतीयशोभगीनातस्यैतेस्वाहा। यजमानः। सरस्वत्यैयशोभगीनायाइदंनमम। अध्वर्युः। यासरस्वतीवेशभगीनातस्यैतेस्वाहा। यजमानः। सरस्वत्यैवेशभगीनायाइदंनमम। अध्वर्युः। पुनःसकृद्गृहीत्वा। इंद्रोपानस्यकेहमनसोवेशान्कुरुसुमनसःसुजातान्स्वाहा। इंद्रायेदंनमम। अध्वर्युः। स्रुवेणपार्वणौहोमौजुहोति। पुरस्तात्स्विष्टकृतोवा। ऋषभंवाजिनंवयंपूर्णमासंयजामहे। सनोदोहताꣳसुवीर्यꣳरायस्पोषꣳसहस्रिणंप्राणायसुराधसेपूर्णमासायस्वाहा। पूर्णमासायेदंनमम। इतिपौर्णमास्यां। अमावास्यासुभगासुशेवाधेनुरिवभूयआप्यायमाना। सानोदोहताꣳसुवीर्यꣳरायस्पोषꣳसहस्रिणमपानायसुराधसेमावास्यायैस्वाहा। अमावास्यायेदंनमम। इत्यमावास्यायां। अध्वर्युः। आप्यायतांषट्। खंडेष्टिषुपुरस्तात्स्विष्टकृतोन्यत्रविकल्पः। दशतेतनुवौयज्ञयज्ञियास्ताःप्रीणातुयजमानोघृतेन। नारिष्ठयोःप्रशिषमीडमानोदेवानांदैव्येपियजमानोमृतोभूत्स्वाहा। नारिष्ठाभ्यामग्निवायुभ्यामिदंनमम। यंवांदेवाअकल्पयन्नूर्जोभागꣳशतक्रतू। एतद्वांतेनप्रीणानितेनतृप्यतमꣳहहौस्वाहा। नारिष्ठाभ्यामग्निवायुभ्यामिदंनमम। अहंदेवानाꣳसुकृतामस्मिलोकेममेदमिष्टंनमिथुर्भवाति। अहंनारिष्ठावनुयजामिविद्वान्यदाभ्यामिंद्रोअदधाद्भागधेयꣳस्वाहा। नारिष्ठाभ्यामग्निवायुभ्यामिदंनमम। अदारसृद्भवतदेवसोमास्मिन्यज्ञेमरुतोमृडतानः।

मानोविदद्भिभामोअशस्तिर्मानोविदद्धजनाद्वेष्यायाःस्वाहा। नारिष्ठेभ्योदेवसोममरुद्भ्यइदंनमम।

ब्रह्मप्रतिष्ठामनसोब्रह्मवाचोब्रह्मयज्ञानाꣳहविषामाज्यस्य।

अतिरिक्तंकर्मणोयच्चहीनंयज्ञःपर्वाणिप्रतिरन्नेतिकल्पयन्स्वाहाकृताहुतिरेतुदेवान्स्वाहा। ब्रह्मणइदंनमम।

संतेमनसामनःसंप्राणेप्राणंदधामितेसंव्यानेनसमपानंदधामिते। परिगृह्ययजमानोमृतौभूच्छंनएधिद्विपदेशंचतुष्पदेस्वाहा।

नारिष्ठायपरमात्मनइदंनमम। अध्वर्युः। आप्यायतांअष्टत्रिꣳशद्गृहीत्वाजुह्वाहवनीयेसर्वप्रायश्चित्तानिजुहोति। इष्टेभ्यःस्वाहा।

इष्टेभ्यइदंनमम। वषडनिष्टेभ्यःस्वाहा। वषडनिष्टेभ्यइदंनमम। भेषजंदुरिष्ट्यैस्वाहा। भेषजंदुरिष्ट्याइदंनमम। निष्कृत्यैस्वाहा।

निष्कृत्याइदंनमम। निर्ऋत्यैस्वाहा। निर्ऋत्याइदंनमम। दौराध्र्यैस्वाहा। दौराध्र्याइदंनमम। दैवीभ्यस्तनूभ्यःस्वाहा।

दैवीभ्यस्तनूभ्यइदंनमम। ऋध्यैस्वाहा। ऋध्याइदंनमम। समृध्यैस्वाहा। समृध्याइदंनमम।

अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि। अयसामनसाधृतोयसाहव्यमूहिषेयानोधेहिभेषजꣳस्वाहा। अग्नयेयसइदंनमम।

इमंमेवरुणश्रुधीहवमद्याचमृडय। त्वामवस्युराचके स्वाहा। वरुणायेदंनमम।

तत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः। अहेडमानोवरुणेहबोध्युरुशꣳसमानआयुःप्रमोषीःस्वाहा।

वरुणायेदंनमम। त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः।

यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्त्स्वाहा। अग्नीवरुणाभ्यामिदंनमम।

सत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ। अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनएधिस्वाहा।

अग्नीवरुणाभ्यामिदंनमम। त्वमग्नेअयास्ययासन्मनसाहितः। अयासन्हव्यमूहिषेयानोधेहिभेषजꣳस्वाहा। अग्नयेयसइदंनमम।

प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव। यत्कामास्तेजुहुमस्तन्नोअस्तुवयꣳस्यामपतयोरयीणाꣳस्वाहा।

प्रजापतयइदंनमम। भूःस्वाहा। अग्नयइदंनमम। भुवःस्वाहा। वायवइदंनमम। सुवःस्वाहा। सूर्यायेदंनमम।

भूर्भुवःसुवःस्वाहा। प्रजापतयइदंनमम। आश्रावितमत्याश्रावितंवषट्कृतमत्यनूक्तमनूक्तंचयज्ञे।

अतिरिक्तंकर्मणोयच्चहीनंयज्ञःपर्वाणिप्रतिरन्नेतिकल्पयन्स्वाहाकृताहुतिरेतुदेवान्स्वाहा। यज्ञायेदंनमम।

अनाज्ञातंयदाज्ञातंयज्ञस्यक्रियतेमिथु। अग्नेतदस्यकल्पयत्वꣳहिवेत्थयथातथꣳस्वाहाकृताहुतिरेतुदेवान्स्वाहा। अग्नयइदंनमम।

अतिरिक्तंन्यूनेजुहोमिन्यूनमतिरिक्तेजुहोमि। समꣳसमेजुहोमिस्वाहाकृताहुतिरेतुदेवान्स्वाहा। देवेभ्यइदंनमम।

यदकर्मयन्नाकर्मयदत्यगामयन्नात्यगामयदत्यरीरिचामयन्नात्यरीरिचाम।

तत्वंविष्णोयज्ञेयज्ञंप्रतिष्ठापयस्वाहाकृताहुतिरेतुदेवान्स्वाहा। देवेभ्यइदंनमम।

यत्प्रमत्तांतरगामकिंचिदस्मिन्यज्ञेमंत्रतःकर्मतोवा।

अनयाहुत्यातच्छमयामिसर्वंतृप्यंतुदेवाहविषोघृतस्यस्वाहाकृताहुतिरेतुदेवान्स्वाहा। देवेभ्यइदंनमम।

ब्रह्मप्रतिष्ठामनसोब्रह्मवाचोब्रह्मयज्ञानांहविषामाज्यस्य।

अतिरिक्तंकर्मणोयच्चहीनंयज्ञःपर्वाणिप्रतिरन्नेतिकल्पयन्स्वाहाकृताहुतिरेतुदेवान्स्वाहा। ब्रह्मणइदंनमम।

ततंमआपस्तदुतायतेपुनःस्वादिष्ठाधीतिरुचथायशस्यते। अयंसमुद्रउतविश्वभेषजःस्वाहाकृताहुतिरेतुदेवान्स्वाहा।

ऋभुभ्यइदंनमम। उद्वयंतमसस्परिपश्यंतोज्योतिरुत्तरं। देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमंस्वाहा। सूर्यायेदंनमम।

उदुत्यंजातवेदसंदेवंवहंतिकेतवः। दृशेविश्वायसूर्यंस्वाहा। सूर्यायेदंनमम। चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः।

आप्राद्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्तथुषश्चस्वाहा। सूर्यायेदंनमम। यद्दौदेवाअतिपादयानिवाचाचित्प्रयतंदेवहेडनं।

अरायोअस्मांअभिदुच्छुनायतेन्यत्रास्मन्मरुतस्तन्निधेतनस्वाहा। मरुद्भ्यइदंनमम। यतंइंद्रभयामहेततोनोअभयंकृधि।

मघवन्छग्धितवतन्नऊतयेविद्विषोविमृधोजहिस्वाहा। इंद्रायमघवतइदंनमम। स्वस्तिदाविशस्पतिर्वृत्रहाविमृधोवशी।

वृषेंद्रःपुरएतुनःस्वस्तिदाअभयंकरःस्वाहा। इंद्रायवृत्रघ्नइदंनमम। आभिर्गीर्भिर्यदतोनऊनमाप्यायहरिवोवर्धमानः।

यदास्तोतृभ्योमहिगोत्रारुजासिभूयिष्ठभाजोअधतेस्याम स्वाहा। इंद्रायहरिवतइदंनमम।

अवंतेहेडोवरुणनमोभिरवयज्ञेभिरीमहेहविर्भिः। क्षयन्नस्मभ्यमसुरप्रचेतोराजन्नेनांसिशिश्रथःकृतानिस्वाहा। वरुणायेदंनमम।

उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमंश्रथाय। अथावयमादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा। वरुणायेदंनमम।

पुरुषसंमितोयज्ञोयज्ञःपुरुषसंमितः। अग्नेतदस्यकल्पयत्वंहिवेत्थयथातथंस्वाहाकृताहुतिरेतुदेवान्स्वाहा। अग्नयइदंनमम।

यत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्तासः। अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवांऋतुशोयजातिस्वाहा।

अग्नयइदंनमम। अध्वर्युः। आप्यायतांध्रुवामाप्याय्य।

देवागातुविदोगातुंवित्वागातुमितमनसस्पतइमंनोदेवदेवेषुयज्ञंस्वाहावाचिस्वाहावातेधाःस्वाहा।

अंतर्वेद्यूर्ध्वस्तिष्ठन्ध्रुवयाहवनीयेत्रीणिसमिष्टयजूंषिजुहोति। मध्यमेस्वाहाकारेबर्हिरनुप्रहरति। यजमानः।

देवेभ्योगातुविद्भ्योयज्ञायपरमात्मनइदंनमम।

अग्नेदब्धायोशीततनोपाहिमाद्यदिवःपाहिप्रसित्यैपाहिदुरिष्ट्यैपाहिदुरद्मन्यैपाहिदुश्चरितादविषंनःपितुंकृणुसुषदायोनिंस्वाहा।

समिष्टयजुरनुमंत्रयते। दिवःखीलोवततःपृथिव्याअध्युत्थितः।

तेनासहस्रकांडेनद्विषंतंशोचयामसिद्विषन्मेबहुशोचत्वोषधेमोअहंशुचं। बर्हिरनुप्रहृतं। संयज्ञपतिराशिषा।

यजमानभागंप्राश्नाति। इदꣳहविःप्रजननंमेअस्तुदशवीरꣳसर्वगणꣳस्वस्तये। आत्मसनिप्रजासनिपशुसन्यंभयसनिलोकसनिवृष्टिसनि। अग्निःप्रजांबहुलांमेकरोत्वन्नंपयोरेतौअस्मासुधत्तरायस्पोषमिषमूर्जमस्मासुदीधरत्। श्वतस्य। दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः। सुरभिनोमुखाकरत्प्रणआयूꣳषितारिषत्। दध्नः। अध्वर्युः। अभिस्तृणीहिपरिधेहिवेदिंजामिंमाहिꣳसीरमुयाशयाना। होतृषदनाहरिताःसुवर्णानिष्काइमेयजमानस्यब्रध्ने। होतृषदनैर्वेदिमभिस्तृणाति। पोषायवः। अग्रेणाहवनीयंप्रणीताःपर्याहृत्य। योवोयौक्षीत्सवोविमुंचतु। अंतर्वेदिविमुंचति। तासुसंततामुदकधाराꣳस्त्रावयति। यजमानः। सदसिसन्मेभूयाःसर्वमसिसर्वंमेभूयाःपूर्णमसिपूर्णंमेभूयाअक्षितमसिमामेक्षेष्ठाः। आनीयमानासुजपति। प्राच्यांदिशिदेवाऋत्विजोमार्जयंतां। दक्षिणायांदिशिमासाःपितरोमार्जयंतां। प्रतीच्यांदिशिगृहाःपशवोमार्जयंतां। उदीच्यांदिश्यापओषधयोवनस्पतयोमार्जयंतां। ऊर्ध्वायांदिशियज्ञःसंवत्सरोयज्ञपतिर्मार्जयंतां। प्रतिदिशंव्युत्सिंचति। समुद्रंवःप्रहिणोम्यक्षिताःस्वांयोनिमपिगच्छत। अच्छिद्रःप्रजयाभूयासंमापरासेचिमत्पयः। शेषंनिनयति। यदप्सुतेसरस्वतिगोष्वश्वेषुयन्मधु। तेनमेवाजिनीवतिमुखमंग्धिसरस्वति। मुखंविमृष्टे। अध्वर्युः। यंदेवामनुष्येषूपवेषमधारयन्। येअस्मदपचेतसस्तानस्मभ्यमिहाकुरु। उपवेषोपविड्ढिनःप्रजांपुष्टिमथोधनं। द्विपदोनश्चतुष्पदोध्रुवाननपगान्कुरु। उपवेषमादाय। योपवेशेशुक्सापाप्मानमृच्छतुयंद्विष्मः। उत्करेनिखनेत्। निरस्येद्वा। निःपाप्मानं। निरमुंनुदओकसःसपत्नोयःपृतन्यति। निर्बाध्येनहविषेंद्रएणंपराशरीत्। इहितिस्त्रःपरावतइहिपंचजनाꣳअति। इहितिस्त्रोतिरोचनायावत्सूर्योअसद्दिवि। परमांत्वापरावतमिंद्रोनयतुवृत्रहा। यतोनपुनरायसिशश्वतीभ्यःसमाभ्यः। हतःपाप्मावधिष्मपाप्मानं। कस्त्वायुनक्तिसत्वाविमुंचतु। यज्ञंविमुंचति। यानिघर्मेकपालान्युपचिन्वंतिवेधसः। पूष्णस्तान्यपिव्रतइंद्रवायूविमुंचतां। कपालानिविमुंचति। यथेतंप्रतिनिष्क्रामति। ब्रह्मा। दिवोभागोसि। ब्रह्मभागंप्राश्य। अयाडग्निर्जातवेदाअदब्धोअंतरःपूर्वोअस्मिन्निषद्य। सुन्वन्त्सनिꣳसुविमुचानोविमुंचधेह्यस्मासुद्रविणंजातवेदोयच्चभद्रंप्रणोयच्छाभिवस्योअस्मान्त्संनःसृजसुमत्यावाजवत्या। समिधमाधाययथेतंप्रतिनिष्क्रामति। यजमानः। अतएवोपोत्थाय। विष्णोःक्रमोस्यभिमातिहागायत्रेणछंदसापृथिवीमनुविक्रमेनिर्भक्तःसयंद्विष्मः। विष्णोःक्रमोस्यभिशस्तिहात्रैष्टुभेनछंदसांतरिक्षमनुविक्रमेनिर्भक्तःसयंद्विष्मः।

विष्णोः क्रमोस्यरातीयतोहंताजागतेनछंदसादिवमनुविक्रमेनिर्भक्तः सयंद्विष्मः।

विष्णोः क्रमोसिशत्रूयतोहंतानुष्टुभेनछंदसादिशोनुविक्रमेनिर्भक्तः सयंद्विष्मः। चतुरोविष्णुक्रमान्क्रामति।

दक्षिणेनप्रक्रम्यसव्येनानुप्रक्रामतितिष्ठंश्चतुर्थंजपति। उद्यन्नद्यमित्रमहः। सपत्नान्मेअनीनशः। दिवैनान्विद्युताजहि।

निम्रोचन्नधरान्कृधि। उद्यन्नद्यविनोभज। पितापुत्रेभ्योयथा। दीर्घायुत्वस्यहेशिषे। तस्यनोदेहिसूर्य। उद्यन्नद्यमित्रमह।

आरोहन्नुत्तरांदिवं। हृद्रोगंममसूर्य। हरिमाणंचनाशय। शुकेषुमेहरिमाणं। रोपणाकासुदध्मसि। अथोहारिद्रवेषुमे।

हरिमाणंनिदध्मसि। उदगादयमादित्यः। विश्वेनसहसासह। द्विषंतंममरंधयन्। मोअहंद्विषतोरधं। योनः शपादशपतः।

यश्चनः शपतः शपात्। उषाश्चतस्मैनिम्रुक्। सर्वंपापंसमूहतां। योनः सपत्नोयोरणः। मर्त्तोभिदासतिदेवाः। इध्मस्यैवप्रक्षायतः।

मातस्योच्छेषिकिंचन। अगन्मसुवः सुवरगन्म।

संदृशस्तेमाछित्सियत्तेतपस्तस्मैतेमावृक्षिसुभूरसिश्रेष्ठोरश्मीनामायुर्धाअस्यायुर्मेधेहिवर्चोधाअसिवर्चोमयिधेहि।

आदित्यमुपतिष्ठते।

इदमहंपाप्मानंभ्रातृव्यमाभ्योदिग्भ्योस्यैदिवोस्मादंतरिक्षादस्यैपृथिव्याअस्मादन्नाद्यान्निर्भजामिनिर्भक्तः सयंद्विष्मः।

यंद्वेष्टितस्यवधंमनसाध्यायति। ऐंद्रीमावृतमन्वावर्ते। प्रदक्षिणमावर्तते। पुण्याभवंतुयालक्ष्मीः पराभवंतुयापापीः।

दक्षिणमंससमभिपर्यावर्तते। तेजोसि। आहवनीयमुपपर्यावर्तते। समहंप्रजयासंमयाप्रजासमहंरायस्पोषेणसंमयारायस्पोषः।

उपतिष्ठते। समिद्धोअग्नेमेदीदिहिसमेद्धातेअग्नेदीद्यासं। अग्नयइदंनमम। उपसमिंधे। वसुमान्यज्ञोवसीयान्भूयासं। उपतिष्ठते।

अग्नेवह्वेस्वदितुंनस्तनयेपितुंपच। विभूःशंतोकायतनुवेस्योनः। दक्षिणाग्निं। अग्नआयूंषिपवसआसुवोर्जमिषंचनः।

आरेबाधस्वदुच्छुनां। अग्नेपवस्वस्वपाअस्मेवर्चः सुवीर्यं। दधत्पोषंरयिंमयि।

अग्नेगृहपतेसुगृहपतिरहंत्वयागृहपतिनाभूयासंसुगृहपतिर्मयात्वंगृहपतिनाभूयाः शतंहिमास्तामाशिषमाशासे।

नारायणशर्मणे। ज्योतिष्मतीं। गार्हपत्यं। ज्योतिषेतंतवेत्वानारायणशर्मन्ननुमाज्योतिषातनु। अंतराग्नीनिषीदति।

वेदतृणान्युपस्थआधाय। येदेवायज्ञहनः पृथिव्यामध्यासते। अग्निर्मातेभ्योरक्षतुगच्छेमसुकृतोवयं।

येदेवायज्ञमुषः पृथिव्यामध्यासते। अग्निर्मातेभ्योरक्षतुगच्छेमसुकृतोवयं।

अगन्ममित्रावरुणावरेण्यारात्रीणांभागोयुवयोर्योअस्ति। नाकंगृह्णानाः सुकृतस्यलोकेतृतीयेपृष्ठेअधिरोचनेदिवः।

येदेवायज्ञहनोंतरिक्षेध्यासते। वायुर्मातेभ्योरक्षतुगच्छेमसुकृतोवयं। येदेवायज्ञमुषोंतरिक्षेध्यासते।

वायुर्मातेभ्योरक्षतुगच्छेमसुकृतोवयं। यास्तेरात्रीः सवितर्देवयानीरंतराद्यावापृथिवीवियंति।

गृहैश्चसवैंःप्रजयान्वग्रेसुवोरुहांणास्तरतारजाꣳसि। येदेवायज्ञहनौदिव्यध्यासंते। सूर्यौमातेभ्यौरक्षतुगच्छेमसुकृतौवयं। येदेवायज्ञमुषौदिव्यध्यासंते। सूर्यौमातेभ्यौरक्षतुगच्छेमसुकृतौवयं। येनेंद्रायसमभंरःपयाꣳस्युत्तमेनंहविषांजातवेदः। तेनांग्नेत्वमुतवंर्धयेमꣳसंजातानाꣳश्रैष्ठ्यआधेह्येनं। अंतर्वेद्यासीनोतीमोक्षान्जपति। स्वायतनंगत्वा। कस्त्वांयुनक्तिसत्वाविमुंचतु। सर्वमनुवीक्षते। अग्नैव्रतपतेव्रतमंचारिषंतदंशकंतन्मैराधि। वायौव्रतपतेव्रतमंचारिषंतदंशकंतन्मैराधि। आदित्यव्रतपतेव्रतमंचारिषंतदंशकंतन्मैराधि। व्रतानांव्रतपतेव्रतमंचारिषंतदंशकंतन्मैराधि। व्रतंविसृजते। यज्ञोबंभूवसआबंभूवसप्रजंज्ञेसवांवृधे। सदेवानामधिपतिर्बभूवसोअस्माꣳअधिपतीन्करोतुवयꣳस्यांमपतंयोरयीणाम्। यज्ञस्यपुनरालम्भंजपति। गोमाꣳअग्नेविमाꣳअश्वीयज्ञोनृवत्संखासदुमिदंप्रमृष्यः। इडांवाꣳएषोअंसुरप्रजावान्दीर्घोरयिःपृथुबुध्नःसभावान्। प्राङुत्क्रम्यजपति। यज्ञशंचतेयज्ञनमोनमंश्चतेयज्ञ। शिवेनंमेसंतिष्ठस्वस्योनेनंमेसंतिष्ठस्वसुभूतेनंमेसंतिष्ठस्वब्रह्मवर्चसेनमैसंतिष्ठस्वयज्ञस्यर्धिमनुसंतिष्ठस्वोपतेयज्ञनमउपंतेनमउपंते नमउपंतेनमः। जपति। वृष्टिरसिवृश्चमेपाप्मानमृतात्सत्यमुपागामप्सुश्रद्धा। अपउपस्पृश्य। यथेतंप्रतिनिष्क्रामति। ब्राह्मणाꣳस्तर्पयितवै। संप्रेष्यति। अग्नेनयसुपंथारायेअस्मान्विश्वानिदेववयुनानिविद्वान्। युयोध्यंस्मज्जुहुराणमेनोभूयिष्ठांतेनमंउक्तिंविधेम। प्रवःशुक्रायभानवेभरध्वꣳहव्यंमतिंचाग्नयेसुपूतं। योदैव्यांनिमानुषाजनूꣳष्यंतर्विश्वानिविद्मनाजिगांतिं। अच्छागिरोमतयौदेवयंतीरग्निंयंतिद्रविणंभिक्षमाणाः। सुसंदृशꣳसुप्रतीकꣳस्वंचꣳहव्यवाहंमरतिंमानुषाणां। अग्नेत्वमस्मद्युयवन्नमीवाअनंग्नित्राअभ्यंमंतकृष्टीः। पुनरस्मभ्यꣳसुवितायंदेवक्षांविश्वेभिरजंरेभिर्यजत्र। अग्नेत्वंपारयानव्योअस्मान्स्वस्तिभिरतिदुर्गाणिविश्वा। पूश्चपृथिवीबंहुलानंउर्वीभवांतोकायतनंयायशंयोः। प्रकारवोमननावच्यमानादेवद्रीचीमनसादेवयंतः। दक्षिणावाड्वाजिनीप्राच्यैतिहविर्भरंत्यग्नयेघृताची। प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत्। स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रुतिः।

। इतिहिरण्यकेशीदर्शपौर्णमासाध्वर्युयजमानाग्नीध्रब्रह्मप्रयोगः।

॥ इदं पुस्तकं चि.ब्र.रामप्रसादेन,चि.ब्र.नारायणेन,चि.ब्र.रविकिरणेन च श्रीमतां गुरूणां साहाय्येन लिखितं ॥

॥ ॐ ॥

श्री गणेशाय नमः।श्री सरस्वत्यै नमः। श्रीगुरुभ्योनमः।

॥ अथदर्शपूर्णमासयाजुषहौत्रप्रयोगप्रारंभः॥

अथ अध्वर्युणा क्लृप्ते होतृषदने होतरेहीत्युक्ते। देवा यो अप्सु महिम इर्षवः सइदमापः प्रवहत यत्किंच दुरितं मयि। यच्चाहमभिदुद्रोहयच्चशेप उदाकृतं। अपआचामति। यज्ञोपवीति। पुनरा चम्य। विहारमभवृत्य। भूः प्रपद्ये। भुवः प्रपद्ये। सुवः प्रपद्ये। भूर्भुवस्सुवः प्रपद्ये। सत्यं प्रपद्ये ऋतं प्रपद्ये मृतं प्रपद्ये प्रजापते प्रियां तनुव मनार्तां प्रपद्ये गायत्रि प्रपद्ये त्रिष्टुभ प्रपद्ये जगति प्रपद्ये नुष्टुभ प्रपद्ये पक्तिं प्रपद्ये। इत्यंतरेणवेद्युत्करौप्रपद्य। उत्तरेणवेदिंप्राङ्ग्मुखमवस्था।

छन्दोभिःछादयेछनदोभिःछन्नोस्मि। जपति। इदमहंपंचदशेन वज्रैणा द्विषंतंभ्रातृव्यमवक्रामामि योस्मद्वेष्टि यंचवयंद्विष्मः। दक्षिणेन पादेनो त्तरां वेदिश्रोणि मवक्रामति। अत्र तिष्ठन्सामिधोनिरन्वाह। वाचं नियंम्या। हृदयदेशेजलिकृत्वा। अग्नये समिद्यमानायानुब्रू३ हिति संप्रेशिते। ब्रम्हन्सामिधेनिरनुवक्ष्यामि। ब्रम्हाणमामंत्रयते। ॐ अनुब्रु३हितिब्रम्हणाप्रसवउक्ते। दशहोतारंव्याख्याया। चितिःस्रुक्। चित्तमाज्यं। वाग्वेदिः। आधीतंबर्हिः। केतौअग्निः। विज्ञातमग्नि। वाक्पतिर्होता। मनउपवक्ता। प्राणोहविः। सामाध्वर्युः। भूर्भुवःसुवः।जपति। हिं हिं हिं त्रिर्हिंकृत्या। प्रवोवाजाअभिद्यवो हविष्मंतोघृताच्या देवांजिगतिसुम्नो३ प्रवोवाजाअभिद्यवो हविष्मंतोघृताच्या देवांजिगतिसुम्नो३ प्रवोवाजाअभिद्यवो हविष्मंतोघृताच्या देवांजिगतिसुम्नो३ मग्नआयाहिवितये गृणानो हव्यदातये। निहोतासत्सिबर्हिषों३ तन्त्वायमिद्भिरंगिरों। गृतेनवर्धयामसि। बृहच्छोचायविष्ट्यो३॰ सनःपृथुः श्रवाय्यमछादोववि वाससि। बृहदग्नेसुवपर्यो३ मिडेन्योनमस्यस्यिरस्तमा॰सिदर्शतः। समग्निरिध्यतेवृषो३ वृषोअग्निःसमिध्यतेश्वोनदेववाहनः। त॰हिविष्मंतइडतों३ वृषणंत्वावयंवृषन् वृषाणसमिधिमहि। अग्नेदियतंवृहो३ मग्निदुतंवृणिमहे होतारंविश्ववेदसं। अस्ययज्ञस्यसुक्रतो३॰समिध्यमानोअध्वरेग्निपावकइड्यः। शोचिष्केशस्तमिमहो३॰। समिधोअग्नआहुतदेवान्यक्षिस्वद्वध्वरा। त्व॰हिहव्यवाडसों३ [माजुहोतदुवस्यता ग्निंप्रयत्यध्वरे वृणिध्व॰हव्यवाहनों३ माजुहोतदुवस्यता ग्निंप्रयत्यध्वरे वृणिध्व॰हव्यवाहनों३

माजुहोतदुवस्यता ग्निंप्रयत्यध्वरे वृणिध्व॰हव्यवाहनों३ ]त्वंवरुण उतमित्रो अग्ने त्वांवर्धंति मतिभर्वसिष्ठास्त्वेवसुसुषणनानिसतुयूयंपातःस्वस्तिभिः--सदानो३ त्वंवरुण उतमित्रो अग्ने त्वांवर्धंति मतिभर्वसिष्ठास्त्वेवसुसुषणनानिसतुयूयंपातःस्वस्तिभिः--सदानो३त्वंवरुण उतमित्रो अग्ने त्वांवर्धंति मतिभर्वसिष्ठास्त्वेवसुसुषणनानिसतुयूयंपातःस्वस्तिभिः--सदानो३ मग्नोमहा॰असिब्राह्मणभारता। वासिष्ठेन्द्रप्रमदाभरद्वसो। अथनदः [ देवेध्दो मन्विध्द ऋषिष्टुतोविप्रामदितः कविशस्तो ब्रह्मस॰शितोगृताहवनः। प्रणीर्यज्ञाना॰रथिरध्वराणा। अतूर्तोहोतातूर्णिर्हव्यवाट्। आस्पात्रंजुहुर्देवानांचमसोदेवपानोरा॰इवाग्नेनेमिर्देवा॰स्त्वंपरिभूरस्यावहदेवान् यजमानाया] अपानति। अग्नमग्न आ३वह। सोममा३वह। अग्नमा३वह। प्रजापतिं(उपांशु) आ३वह। अग्नषोमावा३वह। इद्रंवैमृधमा३वह। (इतिपौर्णमास्यां) इद्राग्निआ३वह (इत्यमावास्यायां)[सन्नयतस्तु। इद्रमा३वह। इद्रयाजिनः। महेद्रमा३वह।

महेंद्रयाजिनः।]उभयत्र। देवाꣳआज्यपाꣳआ३वह। अग्निꣳहोत्रायावह स्वंमहिमानमा३वह। आचाग्ने देवान्वह सुयजाचयजजातवेदः। तत्रैवोध्वज्ञुरूपविशति। असौमा३नुषः इतिश्रुत्वा। उपोथाया। नमोमात्रेपृथिव्यै। पृथिविमभिमृशति। पृथविहोता। द्यौरद्वर्युः। रुद्रोग्नित्। बृहस्पतिरुपवक्ता। अग्निर्होता। अश्विनाध्वर्यू। त्वष्टाग्नीत्। मित्रउपवक्ता। सूर्यंतेचक्षुः। वातंप्राणः। द्यांपृष्ठं। अंतरिक्षमत्मा। अंगैर्यज्ञं। पृथिविꣳशरीरैः। महाहविर्होता। सत्यहविरध्वर्यु। अच्युतपाजाअग्नित्। अच्युतमनाउपवक्ता। अनाधृष्यश्चाप्रतिधृष्यश्चयज्ञस्साभगरौ। अयास्यंउद्गाता। तूष्णिमभिक्रम्या। इंद्रंमन्वारभामहेहोतृवर्यैपुरोहितं। यनायन्नुत्तमꣳस्वर्दोवाअंगिरसोदिवं। दक्षिणहस्तेनाध्वर्युमन्वारभते। तूष्णीसव्येनाग्निध्रं। षष्टिश्चाध्वर्योनवतिश्चतपाषाअध्वर्युमग्निमंतराावियत्ता। सिनंतिपाकमतिधिरएमृतस्यपंथामन्वेमिहोता।चतुर्होता, पंचहोता, षद्धोता, सप्तहोता जपति। समुद्रंमावपदं। एतैर्मत्रैरपरेणहवनियमध्वर्यंचप्रत्यङेत्या। आदित्यस्यावृतमन्वावर्ते। प्रदक्षिण मावर्तते।प्राङ्मुखोभुत्वा। षण्मोर्वीरꣳहंसस्पांतुद्यौश्चा पृथाविहश्चरात्रिश्च कृषिश्चवृष्टिश्च त्विषिश्चापश्चितिश्चापश्चौषधयश्च। जपति। होतृषदनंप्राप्य।निरस्तःपरावसुः। होत्रुषदनात्तृणन्निरस्य अपउपस्पृश्य। येनस्सपत्नाअपतेभवंत्विन्द्राग्निभ्यामवं बाधामहेतान्। वसवोरुद्राआदित्याउपरिस्पृशंमोग्रंचेत्तारमधिराजमक्रन्। हेतृषदनमववधते। अभ्युक्ष्यहेतृषदनम्।
उन्निवतउदुद्वतश्चगेषपातंमद्यावापृथिविअद्यान्हः। सिदहेतःस्वउलोकेचिकित्वान्सादयायज्ञꣳसुकृतस्ययोनौ। देवविर्देवान्हविषायजास्यग्नेनबृहद्यजमानेवयोधाः। इतितस्मिन्नुपविशति। निहोताहोतृषदनेविदानस्त्वेषोदिदिवाꣳअसदत्सुदक्षं। अदब्धव्रतप्रमतिर्वसिष्ठःसहस्रंभरःशचिजिव्होअग्निः॥ आसिनोजपति। लोककृतौलोकंमेकृणुतंमामासंताप्तमेषवान्लोकः। गार्हपत्याहवनियौसमिक्षते।
प्रमेब्रुतभागधेयंयथावोयेनपथाहव्यमावोवहामिजुष्टामद्यदेवेभ्योवाचमुद्यासंजुष्टांब्रह्मभोजुष्टांनाराशꣳसाया॥ देवताउपतिष्ठते। ततःस्रुचावादापयति। अग्निर्होतावेत्वग्निर्होत्रंवेत्तुप्रावित्रꣳस्मोवयꣳसाधुतेयजमानदेवता। घृतवतीमध्वर्योस्रुचमास्यस्वदेवायुवंविश्ववारामिडामहैदेवाꣳईडेन्यांन्नमस्यामनस्यामनमस्यान्यजामयज्ञियान्। ये३यजामहे भुर्भुवःसुवः समिधोअग्नआज्यस्यवेतू३वौ३षट्। वषट् कृत्या। प्राण्यापन्यानिमिषेत्। वागोजःसहओजोवाग्वषट् कारनमस्तेअस्तुमामाहिꣳसीः॥प्रत्युक्तंवषङ्कारमनुमंत्रयते। ये३यजामहे भुर्भुवःसुवः (स्तनुनपादग्नआज्यस्यवेतू) ३वौ३षट्। वासिष्ठानांतु तनुनपादित्यस्यस्थानेये३यजामहे भुर्भुवःसुव नराशꣳसोअग्नआज्यस्यवेतू३वौ३षट्। ये३यजामहे भुर्भुवःसुव रिडोअग्नआज्यस्यवियंतू३वौ३षट्। ये३यजामहे भुर्भुवःसुवर्बर्हिरग्नआज्यस्यवेतू३वौ३षट्। ये३यजामहे भुर्भुवःसुवः स्वाहाग्निꣳस्वाहासोमꣳस्वाहाग्निꣳस्वाहा(प्रजापतिं)(उपांशु)(उचचैः)स्वाहाग्नीषमौस्वाहेन्द्रंवैमृधꣳस्वाहादेवाꣳआज्यपान् त्स्वाहाग्निꣳहोत्राज्जुषणाअग्नआज्यस्यवयंतू३वौ३षट्। (इतिपौर्णमास्यां) ये३यजामहे भुर्भुवःसुवः स्वाहाग्निꣳस्वाहासोमꣳस्वाहाग्निꣳस्वाहेन्द्राग्निस्वाहादेवाꣳआज्यपान् त्स्वाहाग्निꣳहोत्राज्जुषणाअग्नआज्यस्यवयंतू३वौ३षट्। (इत्यमावास्यायां)सन्नयतस्तु। इन्द्राग्नीसिस्थानेइन्द्रंवामहेन्द्रंवा। वार्त्रघ्नावाज्यभागौ। अग्निर्वृत्राणिजंघनद्रविणस्युर्विपन्यया। समिध्दःशुक्रआहुतों३। ये३यजामहे ग्निंभुर्भुवःसुवर्जुषाणोअग्निराज्यस्यवेतू३वौ३षट्। त्वꣳसोमासिसत्पतिस्त्वꣳराजोतवृत्रहा।

त्वंभद्रोअसिक्रतो३। ये३यजामहे सोमं भुर्भुवर्जुषणसोमआज्यस्यहविषोवेतू३वौ३षट्। (पौर्णमास्यां) वृधन्वन्तावाज्यभगौ। अग्निप्रत्नेनजन्मनाशुंभानस्तनुव२स्वां। कविर्विप्रेणवावृधों३। ये३यजामहे ग्निंभुर्भुवःसुवर्जुषाणोअग्निराज्यस्यवेतू३वौ३षट्। सोमगिर्भिष्ट्वावयंवर्धयामोवचोविदः। सुमृडिकोनआविशों३। ये३यजामहे सोमं भुर्भुवर्जुषणसोमआज्यस्यहविषोवेतू३वौ३षट्। (इत्यमावास्यायां)प्रधानस्य। अग्निर्मुर्धादिवःककुत्पतिःपृथिव्याअयं। अपा२रेता२सिजिन्वतों३। ये३यजामहे ग्निं भुर्भुवःसुवर्भुवोयज्ञस्यरजशाचनेतायत्रनियुद्भिःसचसेशिवाभिः। दिविमूर्धानंदधिषेसुवर्षांजिह्वामग्नेतकृषेहव्यवाहां ३वौ३षट्। (प्रजापतेनत्वदेतान्यन्योविश्वाजातानापरातावभुवा। यत्कामास्तेजुहुमस्तन्नोअस्तुवय२स्यामपतयोरयिणा।)(उपांशु)ओऽम्। (उच्चैः) ये३यजामहे (उच्चैः) (प्रजापतिंभुर्भुवःसुवःसवेदपुत्रपितर२समातर२ससुनुर्भुवत्सभुवत्पुनर्मघः।

सद्यामौर्णोदंतरिक्ष२ससुवःसविश्वाभुवोअभवत्सआभवत् ३)(उपांशु) वौ३षट्। (उच्चैः) अग्नीषोमासवेदसासहुतिवनतंगिरः। संदेवत्राबबुवथो३ ये३यजामहेग्निषोमौभूर्भुवःसुवर्युवमेतानिदिविरोचनान्यग्निश्चसोमसक्रतूअधत्तं। युव२सिंधू२रभिशस्तेरवद्यादग्निषोमाविमुंचतंगृभितान्३ वौ३षट्। विनइन्द्रमृधोजहिनिचायच्छपृतन्यतः। । अधस्पदंतमींकृधियोअस्मा२अभिदासतों३। ये३यजामहइन्द्रवैमृधंभुर्भुवःसुवः रिन्द्रक्षत्रमभिवामोजोजायथावृषभचर्षणीना। अपानुदोजनममित्रयंतमुरुंदेवेभ्योअकृणोरुलोकां३वौ३षट्। (मृगोनभीमःकुचरोगिरिष्ठाःपरावतआजगामापरस्याः। सृक२स२शायपविमिंन्द्रतग्मंविशात्रून्ताढिविमृधोनुदस्वा ३वौ३षट्।) इतिपौर्णमास्यां। दर्शेआग्नेयानंतरं। इन्द्राग्निरोचनादिवःपरिवाजेषुभषतः। तद्वांचेतिप्रविर्यो३। ये३यजामहइन्द्राग्नि भुर्भुवःसुवःश्नथद् वृत्रमुतसनोतिवाजमिन्दायोअग्निसहुरिसपर्यात्। इरध्यंतावसव्यश्चभुरेःसहस्तमासहसावाजयंता ३वौ३षट्। अमावास्यायां। एन्द्रसानसि२रयि२सजित्वान२सदासहं। वर्शिष्ठमूतयेभरो३। ये३यजामहे इन्द्रं भुर्भुवःसुवःप्रससाहिषेपुरुहुतशत्रूज्येष्ठस्तेशुष्मइहरातिरस्तु। इन्द्राभरदक्षिणेनावसुनिपतिसिन्धुनामसिरेवतिनां ३वौ३षट्। महा२इन्द्रोयओजसापर्जन्योवृष्टिमा२इवा। स्तोमैर्वत्सस्यवावृधो३। ये३यजामहमहेन्द्रां भुर्भुवःसुव र्महा२इन्द्रोनृवधाचर्षणिप्राउतद्विबर्हाअमिनसहोभिः। अस्मद्रियग्वावृधेविर्यायोरुःपृथुःसुकृतःकर्तृभिर्भूद्ग ३वौ३षट्।। (स्विष्टकृतः) पिप्रिहिदेवा २उशसोयविष्ठ विद्वा २ऋतू २ऋतुपतेयजेहा। येदैव्याऋत्विजस्तेभिरग्नेत्व२होतृणामस्यायजिष्ठो३। ये३यजामहेग्न२स्विश्टकृत मयाडग्निरग्नेःप्रियाधामान्ययाट् सोमस्यप्रियाधामान्याग्नेःप्रियाधामान्ययाट् प्रजापते(उपांशु)प्रियाधामान्ययाडग्नीषोमयोःप्रियाधामान्ययाडिन्द्रस्यवैमृधस्यप्रियाधामान्ययाट्देवानामाज्यपानांप्रियाधामानि । यक्षदग्नेर्होतुःप्रयाधामानि यक्षत्स्वंमहिमानमायजतामेज्याइषः कृणोतुसोअध्वराजातवेदाजुषता२हवि। भूर्भुवःसुवः रग्नेयदद्यविशोअध्वरस्यहोतःपावकशोचेवेष्टव२हियज्वा। ऋतायजासिमहिनावियद्भूर्हव्यावहयविष्ठयातेअद्या ३वौ३षट्। इतिपौर्णमास्यां। ये३यजामहेग्न२स्विश्टकृत मयाडग्निरग्नेःप्रियाधामान्ययाट् सोमस्यप्रियाधामान्याग्नेःप्रियाधामान्ययाडिन्द्राग्नियो प्रियाधामान्ययाडदेवानामाज्यपानांप्रियाधामानि।

यक्षदग्नेर्होतुःप्रयाधामानि यक्षत्स्वंमहिमानमायजतामेज्याइषः कृणोतुसोअध्वराजातवेदाजुषता॑ंहवि। भूर्भुवःसुवः रग्नेयदद्यविशोअध्वरस्यहोतःपावकशोचेवेष्टव॑ंहियज्वा। ऋतायजासिमहिनावियद्भूर्हव्यावहयविष्ठयातेअद्या ३वौ३षट्। इत्यमावास्यायां। [सन्नयतस्तु इन्द्राग्निस्थाने। ये३यजामहेग्न॑ंस्विश्टकृतंभूर्भुवःसुव रयाडग्निरग्नेःप्रियाधामान्ययाट् सोमस्यप्रियाधामान्याग्नेःप्रियाधामान्ययाण्महेन्द्रस्य प्रियाधामान्ययाडदेवानामाज्यपानांप्रियाधामानि। यक्षदग्नेर्होतुःप्रयाधामानि यक्षत्स्वंमहिमानमायजतामेज्याइषः कृणोतुसोअध्वराजातवेदाजुषता॑ंहवि रग्नेयदद्यविशोअध्वरस्यहोतःपावकशोचेवेष्टव॑ंहियज्वा। ऋतायजासिमहिनावियद्भूर्हव्यावहयविष्ठयातेअद्या ३वौ३षट्।] अथांन्ते अंगुलि पर्वणि अवघ्राया। अपउपस्पृश्या। अध्वर्युपस्तीर्णेहोतृपाणौ। होताद्विरादत्ते। अध्वर्युणाभिघारितेसअंगुलिभिर्विनिगृह्या मुखसंनितामिडामुपह्वयते। उपहुत॑रथंतर॑ंसहपृथिव्योपमारथंतर॑ंसहपृथिव्याह्वयतामुहुतंवामदेव्य॑ंसहांतरिक्षेणोपमावामदेव्य॑ंसहांतरिक्षेणह्वयतांमुपहुतं बृहत्सहदिवोपमाबृहत्सहदिवाह्वयतामुपहुतासप्तहोत्राउपमासप्तहोत्राव्ह्यंता मुपहुतोभक्षःसखोपमाभक्षःसखाह्वयंता मुपहूतां३हो। अथोच्चैः। उपहुतेडोपहुतेडोपोअस्मा॑ंइडाह्वयतामुपहुतेडोपहुतेडा। मानविघृतपदीमैत्रावरुणिब्रह्मदेवकृतमुपहूतंदैव्याअध्वर्यवउपहुताउपहूतामनुष्याः। यइमंयज्ञमवान् येयज्ञपतिंवर्धानुपहूतेद्यावापृथिविपूर्वजेरुतावरीदेविदेवपुत्रे। उपहूतोयंयजमानउत्तरस्यांदेवयज्यायामुपहूतोभूयसिहविष्करणउपहूतोदिव्येधामन्नपहूइदंमेदेवाहविर्जुषन्तामितितस्मिन्नुपहुतो विश्वमस्यप्रियमुपहूतंविश्वस्यप्रियस्येपहूतस्योपहूतः। इडामुपहुय। वाचस्पतयेत्वाहुतंप्राश्नामिसदसस्पतयेत्वाहुतंप्राश्नामि। अवांतरेडां प्राश्नाति। इडासिस्योनासिस्योनकृत्सानोरायस्पोषैसुप्रजास्त्वैधाः। मुखस्यत्वाद्युम्नायसुरभ्यास्यत्वायत्वाप्राश्नामि। इडाभागंप्राश्नाति। मनोज्योतर्जुषतामाज्यंविच्छिंनंयज्ञ॑ंसमिमंदधातु। बृहस्पतिस्तनुतामिमनोवश्वेदेवाइहमादयंतां। मार्जयित्वा। पृथिव्यैभगोसि। होतृभागंप्राश्या। दक्षिणांप्रतिग्रहिश्यन्त्सप्तदशकृत्वोपान्यात्। देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यां प्रतिगृह्णामिराजात्वावरुणोनयतुदेविदक्षिणेब्रह्मणओद नंतेनामृतत्वमश्यांवयोदात्रे भुयान्मयोमैहमस्तुप्रतिग्रहित्रे कइदंकस्माअदात्कामःकामायकामौदाताकामःप्रतिग्रहिताकाम॑ंसमुद्रमाविशकामैनत्वाप्रतिगृह्णामिकामैतत्तएषा तेकामदक्षिणोत्तानस्त्वांङिरसःप्रतिगृह्णातु। अनुयाजेदेवान्यजेतिसंप्रेषिते। ये३यजामहे भुर्भुवःसुव देवंबर्हिर्वसुवनवसुधेयस्यवेतू ३वौ३षट्। ये३यजामहे भुर्भुवःसुव देवोनराश॑ंसोवसुवनेवसुधेयस्यवेतू३वौ३षट्। ये३यजामहे भुर्भुसुवर्देवोअग्निस्विष्टकृत्सुद्रविणामन्द्रःकविसत्यमन्मायजिहोताहोतुर्होतुरायजियानग्नेयान्देवानयाड्या॑ंअपिप्रेयेतेहोत्रेअमत्स तत्। ता॑ंससनुषी॑ंहोत्रांदेवंगमादिविदेवेषुयज्ञमेरयेम॑ंस्विष्टकृच्चाग्नेहोताभूर्वसुवनेवसुधेयस्यनमोवाकेवीही ३वौ३षट्। सूक्तवाकायसंप्रेषिते। इदंद्यापृवीभद्रमभूदार्ध्मसूक्तवाकमुतनमोवाकमृध्यास्मसूक्तोच्यमग्ने त्व॑ंसूक्तवागसि। उपश्रितोदिवः पृथिव्योरोमन्वतीतेस्मिन्यज्ञेयजमानद्यावापृथीस्तां। शंगयेजिरदानु अत्रस्नूरप्रवेदेउरुगव्यूतिनभयंकृतौ वृष्टिद्यावारीत्यापा

शंभुवौमयोभुवावूर्जस्वतीचपयस्वतीच सूपचरणाचस्वधिचरणाचतयोराविधि। अग्निरिदꣳहविरजुषताविवृधꣳतमहोज्यायोकृत। सोमइदꣳहविरजुषताविवृधꣳतमहोज्यायोकृत। अग्निरिदꣳहविरजुषताविवृधꣳतमहोज्यायोकृत। प्रजापतिः। (उपांशु) इदꣳहवः (उच्चैः)अजुषताविवृधत(उपांशु)महोज्यायः (उच्चैः) अकृत। अग्नीषोमाविदँहविरजुषेतामवीवृधेतांमहोज्यायोक्रातां। इंद्रोवैमृधइदꣳहविरजुषताविवृधतमहोज्यायोकृत। (दर्शे) अग्निरिदꣳहविरजुषताविवृधतमहोज्यायोकृत। सोमइदꣳहविरजुषताविवृधतमहोज्यायोकृत। अग्निरिदꣳहविरजुषताविवृधतमहोज्यायोकृत। इंद्राग्नीइदꣳहविरजुषेतामविवृधेतामहोज्यायोक्रातां। सन्नयतस्तु।(इंद्राग्निस्थाने) इंद्रइदꣳहविरजुषताविवृधतमहोज्यायोकृत। महेंद्रइदꣳहविरजुषताविवृधतमहोज्यायोकृत। इतिवा। उभयत्र। देवाआज्यपाआज्यमजुषंतावीवृधंतमहोज्यायोक्रत। अग्निर्होत्रेणेदꣳहविरजुषताविवृधतमहोज्यायोकृत। अस्यामृधघोत्रायांदेवंगमायामाशास्तेयंयजमानः। अमुकशर्मायजमानः। नक्षत्रनामसोमयाजीतितृतीयं।

आयुराशास्तेसुप्रजास्त्वमाशास्तेसजातवनस्यामाशास्तउत्तरांदेवयज्यामाशास्तेभूयोहविष्करणमाशास्तेदिव्यं धामाशास्तेविश्वंप्रियमाशास्तेयदनेनहविषाशास्तेतदश्यात्तद्ध्यात्तदस्मैदेवारासंतांतदग्निर्देवोदेवेभ्योवनतेवयमग्नेर्मानुषाः। इष्टंचवीतंचोभेचनोद्यावापृथिवीअꣳहसस्पातामिहगतिर्वामस्येदंचनमोदेवेभ्यः। शंयोर्ब्रूहीतिसंप्रेषिते। तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतयेदैवीस्वस्तिरस्तुनः स्वस्तिर्मानुषेभ्यः। ऊर्ध्वंजिगातुभेषजꣳशन्नोअस्तुद्विपदेशंचतुष्पदे। हविःशेषंप्राश्य। वेदमादायापत्नीसंयाजार्थंप्रत्यङेत्य। अपरेणगार्हपत्यमुपविश्यसंयाजयंति। आप्यायस्वसमेतुतेविश्वतःसोमवृष्णियं। भवावाजस्ययंगथों३। ये३यजामहेसोमंभूर्भुवःसुवःसंतेपयाꣳसिसमुयंतुवाजाःसंवृष्णियान्यभिमातिषाहः। आप्यायमानोअमृतायसोमदिविश्रवाꣳस्युत्तमानिधिष्वा३वौ३षट्। इहत्वष्टारमग्रियंविश्वरुपमुपह्वये। अस्माकमस्तुकेवलों३। ये३यजामहे त्वष्टारंभूर्भुवःसुवःस्तनःस्तुरीपमधपोषयित्नुदेवत्वष्टर्विरराणस्यस्व। यतोविरःकर्मण्यःसुदक्षोयुक्तग्रावाजायतेदेवकामा३वौषट्। देवानांपत्निरुशतिरवंतुनःप्रावंतुनःस्तुजयेवाजसातये। याःपार्थिवासोयाअपामपिव्रतेतानोदेवीःसुहवाःशर्मयच्छतों३। ये३यजामहे देवानांपत्नीर्भूर्भुवःसुवरुतग्नाावियंतुदेवपत्नीरिंद्राण्यग्नाय्यश्विनीराट्। आरोदसीवरुणानीश्रृणोतुवियंतुदेवीर्यऋतुर्जनीनां३वौ३षट्। राकामहꣳसुहवाꣳसुष्टुतीहुवेश्रृणोतुनःसुभगाबोधतुत्मना। सीव्यत्वपःसूच्याच्छिद्यमानयाददातुवीरꣳशतदायमुक्त्यों३। ये३यजामहेराकांभूर्भुवःसुवर्यास्तेराकेसुमतयःसुपेशसोयाभिर्ददासिदाशुषेवसूनि। ताभिर्नोअद्यसुमनाउपागहिसहस्रपोषꣳसुभगेरराणा३वौ३षट्। सिनिवालिपृथुष्टुकेयादेवानामसिस्वसा। जुषस्वहव्यमाहुतंप्रजांदेविदिदिड्ढिनों३। ये३यजामहेसिनीवालींभूर्भुवःसुवर्यासुपाणिःस्वंगुरिःसुषूमाबहुसूवरी। तस्यैविश्पत्नियैहविः सिनीवाल्यैजुहोतना३वौ३षट्। कुहूमहꣳसुभगांविद्मनापसमस्मिन्यज्ञेसुहवांजोहवीमि। सानोददातुश्रवणंपितृणांतस्यास्तेदेविहवि षाविधेमों३। ये३यजामहेकुहूंभूर्भुवःसुवःकुहूर्देवानाममृतस्यपत्नीर्हव्यानोअस्यहविषश्चिकेतु।

संदाशुषेकिरतुभूरिवाम॑ऽरायस्पोषंचिकितुषेदधातू३वौ३षट्। अग्निर्होतागृहपतिःसराजाविश्वावेदजनिमाजातवेदाः।
देवानामुतयोमर्त्यानांयजिष्ठःसप्रयजतामृतावों३।
ये३यजामहेग्निंगृहपतिंभूर्भुवःसुवर्वयमुत्वागृहपतेजनानामग्नेअकर्मसमिधाबृहन्तं।
अस्थूरिणोगार्हपत्यानिसंतुतिग्मेननस्तेजसास॑ऽशिशाधी३वौ३षट्। अथ अंगुलिपर्वणिअवघ्राय। अपउपस्पृश्य। आज्येडामुपहूयते।
उपहुत॑ऽरथंतर॑ऽसहपृथिव्योपमारथंतर॑ऽसहपृथिव्याह्वयतामुपहुतंवामदेव्य॑ऽसहांतरिक्षेणोपमावामदेव्य॑ऽसहांतरिक्षेणह्वयतामुपहुतंबृहत्सहदिवोपमाबृहत्सहदिवाह्वयतामुपहुताःसप्तहोत्राउपमासप्तहोत्राव्हयंता
मुपहुतोभक्षःसखोपमाभक्षःसखाह्वयतामुपहूतां३हो। उपहुतेडोपहुतेडोपोअस्मा॑ऽइडाह्वयतामुपहुतेडोपहुतेडा। मानवीघृतपदीमैत्रावरुणीब्रह्मदेवकृतमुपहूतंदैव्याअध्वर्यवउपहुताउपहूतामनुष्याः। यइमंयज्ञमवान् येयज्ञपत्नींवर्धानुपहूतेद्यावापृथिवीपूर्वजेरुतावरीदेवीदेवपुत्रे।
उपहूतेयंयजमानेंद्राणीवाविधवादितिरिवसुपुत्रोत्तरस्यांदेवयज्यायामुपहूताभूयसिहविष्करणउपहूतादिव्येधामन्नपहूतेदंमेदेवाहविर्जुषंतामितितस्मिन्नुपहूताविश्वमस्याःप्रियमुपहुतंविश्वस्यप्रियस्येपहूतस्योपहूता। तूष्णींप्राश्या। आचम्य।
वेदोंसिवित्तिरसिविदेयकर्मासिकुरुर्णमसिक्रियास॑ऽसनिरसिसनितासिसनेयंघृतवंतंकुलायिन॑ऽरायस्पोष॑ऽसहस्रिणंवेदोदधातुवाजिनं। वेदैकदेशंतृणंनेतिगार्हपत्यासंततमाहवनियात्। यथेतंप्रतिनिष्क्रामति।

। इतिहिरण्यकेशीदर्शपौर्णमाहौत्रप्रयोगः।

॥ इदं पुस्तकं चि.ब्र.रामप्रसादेन श्रीमतां गुरूणां साहाय्येन लिखितं ॥